व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः
कूपान्तः पतितः करोतु विधुरे किंवा विधौ पौरुषम् ॥ ८१ ॥

अथाहमेकोन्यत्र गतः । शेषा मूढतया तत्रैव दुर्गे प्रविष्टाः । अत्रान्तरे स दुष्टपरिव्राजको रुधिरबिन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः । ततश्च स्वहस्तिकया खनितुमारब्धः । अथ तेन खनता प्राप्तं तन्निधानं यस्योपरि सदैवाहं कृतवसतिर्यस्योष्मणा महादुर्गमपि गच्छामि । ततो हृष्टमनास्ताम्रचूडमिदमूचेभ्यागतः । भो भगवन् इदानीं स्वपिहि निःशङ्कः । अस्योष्मणा मूषकस्ते जागरणं करोति । एवमुक्त्वा निधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि । अहमपि यावन्निधानमागच्छामि तावदरमणीयमुद्वेगकारकं तत्स्थानं वीक्षितुमपि न शक्नोमि । अचिन्तयं च । किं करोमि । क्व गच्छामि । कथं मे स्यान्मनसः प्रशान्तिः । एवं चिन्तयतो महाकष्टेन स दिवसो व्यतिक्रान्तः । अथास्तमितेर्के सोद्वेगो निरुत्साहस्तस्मिन्मठे सपरिवारः प्रविष्टः । अथास्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः । अथासावभ्यागतः प्राह । सखे किमद्यापि निःशङ्को न निद्रां गच्छसि । स आह । भगवन् भूयोपि समायातः सपरिवारः स दुष्टात्मा मूषकः । तद्भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि । ततो विहस्याभ्यागतः प्राह । सखे मा भैषीः । वित्तेन सह गतोस्य कूर्दनोत्साहः । सर्वेषामपि जन्तूनामियमेव स्थितिः । उक्तं च ।

यदुत्साही सदा मर्त्यः पराभवति यज्जनान् ।
यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम् ॥ ८२ ॥

अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोप्राप्त एव भूमौ निपतितः । तच्छ्रुत्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच । भोः पश्य पश्य कौतूहलम् । आह च ।

अर्थेन बलवान्सर्वो अर्थयुक्तः स पण्डितः ।
पश्यैनं मूषकं व्यर्थं सजातेः समतां गतम् ॥ ८३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

तत्स्वपिहि त्वं गतशङ्कः । यदस्योत्पतनकारणं तदावयोर्हस्तगतं जातम् । अथवा साध्विदमुच्यते ।

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः ॥ ८४ ॥

5 तच्छ्रुत्वाहं मनसा विचिन्तितवान् । यतोऽङ्गुलिमात्रमपि कूर्दनशक्तिर्नास्ति तद्धिगर्थहीनस्य पुरुषस्य जीवितम् । उक्तं च ।

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ८५ ॥
यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः ।
10 नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥ ८६ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः ।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ८७ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः ।
यथा द्रव्याणि संप्राप्य तैर्विहीनः सुखैधितः ॥ ८८ ॥
15 शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ८९ ॥
शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता ।
उपकर्तुमपि प्राप्तं निःस्वं संत्यज्य गच्छति ॥ ९० ॥
उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
20 हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ ९१ ॥
व्यक्तेऽपि वासरे नित्यं दौर्गत्यतमसावृतः ।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते ॥ ९२ ॥

एवं विलप्याहं भग्नोत्साहस्तन्निधानं गण्डोपधानीयकृतं दृष्ट्वा स्वं दुर्गं प्रभाते गतः । ततश्च मङ्गल्याः प्रभाते गच्छन्तो मिथो जल्पन्ति । 25 अहो असमर्थोऽयमुदरपूरणेऽस्माकम् । केवलमस्य पृष्ठलग्नानां बिडालादिविपत्तयः । तत्किमनेनाराधितेन । उक्तं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः ।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ ९३ ॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोहम् । यावन्न कश्चिन्मम संमुखोभ्येति तावन्मया चिन्तितम् । धिगियं दरिद्रता । अथवा साध्विदमुच्यते । 5

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ९४ ॥

एवं मे चिन्तयतस्ते भृत्या मम शत्रूणां सेवका जाताः । ते च मामेकाकिनं दृष्ट्वा विडम्बनां कुर्वन्ति । अथ मयैकाकिना योगनिद्रां गतेन भूयो विचिन्तितम् । यत्तस्य कुतपस्विनः समाश्रयं गत्वा तद्गण्डोप- 10 धानवर्तिकृतां वित्तपेटां शनैःशनैर्विदार्य तस्य निद्रावशं गतस्य स्वदुर्गे तद्वित्तमानयामि येन भूयोपि मे वित्तप्रभावेनाधिपत्यं पूर्ववद्भवति । उक्तं च ।

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः ।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥ ९५ ॥ 15
दौर्गत्यं देहिनां दुःखमपमानकरं परम् ।
येन स्वैरपि मन्यन्ते जीवन्तोपि मृता इव ॥ ९६ ॥
दैन्यस्य पात्रतामेति पराभूतेः परं पदम् ।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥ ९७ ॥
लज्जन्ते बान्धवास्तेन संबन्धं गोपयन्ति च । 20
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ ९८ ॥
मूर्तं लाघवमेवैतदपायानामिदं गृहम् ।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ ९९ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः ।
दीपखट्वोत्थच्छायेव त्यज्यते निर्धनो जनैः ॥ १०० ॥ 25
शौचावशिष्टयाप्यस्ति किंचित्कार्यं क्वचिन्मृदा ।
निर्धनेन जनेनैव न तु किंचित्प्रयोजनम् ॥ १०१ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अधनो दातुकामोपि संप्राप्तो धनिनां गृहम् ।
मन्यते याचकोयं धिग्दारिद्र्यं खलु देहिनाम् ॥ १०२ ॥

अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम् । उक्तं च ।

5 स्ववित्तहरणं दृष्ट्वा यो न रक्षत्यसौ नरः ।
पितरोपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ १०३ ॥

तथा च ।

गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा ।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥ १०४ ॥

10 एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्तावत्प्रबुद्धो दुष्टतापसः । ततश्च जर्जरवंशप्रहारेण शिरसि ताडितः कथंचिदायुःशेषतया निर्गतोहं न मृतश्च । उक्तं च ।

प्राप्तव्यमर्थं लभते मनुष्यो
देवोपि तं लङ्घयितुं न शक्तः ।
15 तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ १०५ ॥

काककूर्मौ पृच्छतः । कथमेतत् । हिरण्यक आह ।

---

## कथा ४.

अस्ति कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक् । तत्सूनुना रूप-
20 कशतेन विक्रीयमाणः पुस्तको गृहीतः । तस्मिंश्च लिखितमस्ति ।

प्राप्तव्यमर्थं लभते मनुष्यो
देवोपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ १०६ ॥

25 तद्दृष्ट्वा सागरदत्तेन तनुजः पृष्टः । पुत्र कियता मूल्येनैष पुस्तको गृहीतः । सोब्रवीत् । रूपकशतेन । तच्छ्रुत्वा सागरदत्तोब्रवीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

अधनो दातुकामोपि संप्राप्तो धनिनां गृहम् ।
मन्यते याचकोयं धिग्दारिद्र्यं खलु देहिनाम् ॥ १०२ ॥
अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम् । उक्तं च ।
5 स्ववित्तहरणं दृष्ट्वा यो न रक्षत्यसौ नरः ।
पितरोपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ १०३ ॥
तथा च ।
गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा ।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥ १०४ ॥
10 एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्तावत्प्रबुद्धो दुष्टतापसः । ततश्च जर्जरवंशप्रहारेण शिरसि ताडितः कथंचिदायुःशेषतया निर्गतोहं न मृतश्च । उक्तं च ।
प्राप्तव्यमर्थं लभते मनुष्यो
देवोपि तं लङ्घयितुं न शक्तः ।
15 तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ १०५ ॥
काककूर्मौ पृच्छतः । कथमेतत् । हिरण्यक आह ।

---

## कथा ४.

अस्ति कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक् । तत्सूनुना रूप-
20 कशतेन विक्रीयमाणः पुस्तको गृहीतः । तस्मिंश्च लिखितमस्ति ।
प्राप्तव्यमर्थं लभते मनुष्यो
देवोपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ १०६ ॥
25 तद्दृष्ट्वा सागरदत्तेन तनुजः पृष्टः । पुत्र कियता मूल्येनैष पुस्तको गृहीतः । सोऽब्रवीत् । रूपकशतेन । तच्छ्रुत्वा सागरदत्तोऽब्रवीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धिङ्मूर्ख त्वं लिखितैकश्लोकं पुस्तकं रूपकशतेन यद्गृह्णास्येतया बुद्ध्या कथं द्रव्योपार्जनं करिष्यसि । तदद्यप्रभृति त्वया मे गृहे न प्रवेष्टव्यम् । एवं निर्भर्त्स्य गृहान्निःसारितः । स च तेन निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा किमपि नगरमासाद्यावस्थितः । अथ कतिपयदिवसैस्तन्नगरनिवासिना केनचिदसौ पृष्टः । कुतो भवानागतः । किंनामा त्वम् । 5 असावब्रवीत् । प्राप्तव्यमर्थं लभते मनुष्यः । अथान्येनापि पृष्टेनानेन तथैवोत्तरं दत्तम् । एवं च तस्य नगरस्य मध्ये प्राप्तव्यमर्थ इति तस्य प्रसिद्धं नाम जातम् । अथ राजकन्या चन्द्रवती नामाभिनवरूपयौवनसंपन्ना सखीद्वितीयैकस्मिन्दिवसे नगरं निरीक्षमाणास्ति । तत्रैव च कश्चिद्राजपुत्रोतीव रूपसंपन्नो मनोरमश्च कथमपि तस्या दृष्टि- 10 गोचरे गतः । तद्दर्शनसमकालमेव कुसुमबाणाहतया तया निजसख्यभिहिता । सखि यथा किलानेन सह समागमो भवति तथाद्य त्वया यतितव्यम् । एवं च श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत् । यदहं चन्द्रवत्या तवान्तिकं प्रेषिता । भणितं च त्वां प्रति तया । यन्मम त्वद्दर्शनान्मनोभवेन पश्चिमावस्था कृता । तद्यदि शीघ्रमेव 15 मदन्तिके न समेष्यसि तदा मे मरणं शरणम् । इति श्रुत्वा तेनाभिहितम् । यद्यवश्यं मया तत्रागन्तव्यं तत्कथय केनोपायेन प्रवेष्टव्यम् । अथ सख्याभिहितम् । रात्रौ सौधावलम्बितया दृढवरत्रया त्वया तत्रारोढव्यम् । सोब्रवीत् । यद्येवं निश्चयो भवत्यास्तदहमेवं करिष्यामि । इति निश्चित्य सखी चन्द्रवतीसकाशं गता । अथागतायां रजन्यां स 20 राजपुत्रः स्वचेतसा व्यचिन्तयत् । अहो महदकृत्यमेतत् । उक्तं च ।

गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम् ।
यो गच्छति पुमाँल्लोके तमाहुर्ब्रह्मघातिनम् ॥ १०७ ॥

अपरं च ।

अयशः प्राप्यते येन येन चापगतिर्भवेत् ।
स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत् ॥ १०८ ॥　　25

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति सम्यग्विचार्य तत्सकाशं न जगाम । अथ प्राप्तव्यमर्थः पर्यट-

न्धवलगृहपार्श्वे रात्राववलम्बितवरत्रां दृष्ट्वा कौतुकाविष्टहृदयस्तामाल-
म्ब्याधिरूढः । तया च राजपुत्र्या स एवायमित्याश्वस्तचित्तया स्नान-
खादनपानाच्छादनादिना संमान्य तेन सह शयनतलमाश्रितया तद-
ङ्गसंस्पर्शसंजातहर्षरोमाञ्चितगात्रयोक्तम् । युष्मद्दर्शनमात्रानुरक्तया
मयात्मा प्रदत्तोयम् । त्वद्वर्जमन्यो भर्ता मनस्यपि मे न भविष्यतीति ।
तत्कस्मान्मया सह न ब्रवीषि । सोब्रवीत् । प्राप्तव्यमर्थं लभते मनुष्यः ।
इत्युक्ते तयान्योयमिति मत्वा धवलगृहादुत्तार्य मुक्तः । स तु खण्डदे-
वकुले गत्वा सुप्तः । अथ तत्र कयाचित्स्वैरिण्या दत्तसंकेतको यावद्द-
ण्डपाशकः प्राप्तस्तावदसौ पूर्वसुप्तस्तेन दृष्टो रहस्यसंरक्षणार्थमभिहित-
श्च । को भवान् । सोब्रवीत् । प्राप्तव्यमर्थं लभते मनुष्यः । इति श्रुत्वा
दण्डपाशकेनाभिहितम् । यच्छून्यं देवगृहमिदम् । तदत्र मदीयस्थाने
गत्वा स्वपिहि । तथा प्रतिपद्य स मतिविपर्यासादन्यशयने सुप्तः । अथ
तस्य रक्षकस्य बृहत्कन्या विनयवती नाम रूपयौवनसंपन्ना कस्यापि
पुरुषस्यानुरक्ता संकेतं दत्त्वा तत्र शयने सुप्तासीत् । अथ सा तमा-
यातं दृष्ट्वा स एवायमस्मद्वल्लभ इति रात्रौ घनतरान्धकारव्यामोहि-
तोत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेनात्मानं
विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह ।
किमद्यापि मया सह विश्रब्धं भवान्न ब्रवीति । सोब्रवीत् । प्राप्तव्य-
मर्थं लभते मनुष्यः । इति श्रुत्वा तया चिन्तितम् । यत्कार्यमसमीक्षि-
तं क्रियते तस्येदृक्फलविपाको भवतीति । एवं विमृश्य सविषादया
तया निःसारितोसौ । स च यावद्वीथीमार्गेण गच्छति तावदन्य-
विषयवासी वरकीर्तिर्नाम वरो महता वाद्यशब्देनागच्छति । प्राप्तव्यम-
र्थोपि तैः समं गन्तुमारब्धः । अथ यावत्प्रत्यासन्ने लग्नसमये राजमा-
र्गासन्नश्रेष्ठिगृहद्वारि रचितमण्डपवेदिकायां कृतकौतुकमङ्गलवेषा व-
णिक्सुतास्ते तावन्मदमत्तो हस्त्यारोहकं हत्वा प्रणश्यज्जनकोलाह-
लेन लोकमाकुलयंस्तमेवोद्देशं प्राप्तः । तं च दृष्ट्वा सर्वे वरानुयायिनो
वरेण सह प्रणश्य दिशो जग्मुः । अथास्मिन्नवसरे भयतरललोचना-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काकिनीं कन्यामवलोक्य मा भैषीरहं परित्रातेति सुधीरं स्थिरीकृत्य दक्षिणपाणौ संगृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान् । ततः कथमपि दैवयोगादपयाते हस्तिनि यावत्ससुहृद्बान्धवोतिक्रान्ते लग्नसमये वरकीर्तिरागच्छति तावत्तां कन्यामन्यहस्तगतां दृष्ट्वाभिहितम् । भोः श्वशुरक विरुद्धमिदं त्वयानुष्ठितं यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्तेति । सोब्रवीत् । 5

भो अहमपि हस्तिभयपलायितो भवद्भिः सहायातो न जाने किमिदं वृत्तम् । इत्यभिधाय दुहितरं प्रष्टुमारब्धः । वत्से न त्वया सुन्दरं कृतम् । तत्कथ्यतां कोयं वृत्तान्तः । साब्रवीत् । यदहमनेन प्राणसंशयाद्रक्षिता तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यतीति । 10 अनेन वार्त्ताव्यतिकरेण रजनी व्युष्टा । अथ प्रातस्तत्र संजाते महाजनसमवाये वार्त्ताव्यतिकरं श्रुत्वा राजदुहिता तद्देशमागता । कर्णपरंपरया श्रुत्वा दण्डपाशकसुतापि तत्रैवागता । अथ तं महाजनसमवायं श्रुत्वा राजापि तत्रैवाजगाम । प्राप्तव्यमर्थं प्राह । यद्विश्रब्धं कथय कीदृशोसौ वृत्तान्तः । अथ सोब्रवीत् । प्राप्तव्यमर्थं लभते मनुष्य 15 इति । राजकन्या स्मृत्वाब्रवीत् । देवोपि तं लङ्घयितुं न शक्तः । ततो दण्डपाशकसुताब्रवीत् । तस्मान्न शोचामि न विस्मयो म इति । तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताब्रवीत् । यदस्मदीयं न हि तत्परेषामिति । अभयदानं दत्त्वा राजा पृथक्पृथग्वृत्तान्ताञ्ज्ञात्वावगततत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सर्वा- 20 लंकारपरिवारयुतां दत्त्वा त्वं मे पुत्रोसीति नगरविदितं तं यौवराज्येभिषिक्तवान् । दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना संभाव्य प्राप्तव्यमर्थाय प्रदत्ता । अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे संमानपुरःसरं समानीतौ । अथ सोपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः । अतोहं 25 ब्रवीमि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ १०९ ॥

5 तदेतत्सकलं सुखदुःखमनुभूय परं विषादमागतोनेन मित्रेण त्वत्सकाशमानीतः । तदेतन्मे वैराग्यकारणम् । मन्थरक आह । भद्र भवति सुहृदयमसंदिग्धं यः क्षुत्क्षामोपि शत्रुभूतं त्वां भक्षस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेपि भक्षयति । उक्तं च यतः ।

विकारं याति नो चित्तं वित्ते यस्य कदाचन ।
10 मित्रस्य सुकुलीनस्य कारयेन्मित्रमुत्तमम् ॥ ११० ॥
विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम् ।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः ॥ १११ ॥

तथा च ।

आपत्काले तु संप्राप्ते यन्मित्रं मित्रमेव तत् ।
15 वृद्धिकाले तु संप्राप्ते दुर्जनोपि सुहृद्भवेत् ॥ ११२ ॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम् । अथवा साध्विदमुच्यते ।

मित्रं कोपि न कस्यापि नितान्तं न च वैरकृत् ।
दृश्यते मित्रविध्वस्तः कार्याद्वैरिभिरक्षितः ॥ ११३ ॥

20 तत्स्वागतं भवतः । स्वगृहवदास्यतामत्र सरस्तीरे । यच्च वित्तनाशो विदेशवासश्च ते संजातस्तत्र विषये संतापो न कर्तव्यः । उक्तं च ।

अभ्रच्छाया खलप्रीतिः सिद्धमन्नं च योषितः ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ ११४ ॥

25 अत एव विवेकिनो जितात्मानो धनस्पृहां न कुर्वन्ति । उक्तं च ।

सुसंचितैर्जीवनवत्सुरक्षितै-
र्निजेपि देहे न वियोजितैः क्वचित् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुंसो यमान्तं व्रजतोपि निष्ठुरै-
रेतैर्धनैः पञ्चपदी न दीयते ॥ ११५ ॥

अन्यच्च ।

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ११६ ॥
निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः ।
निर्धनः प्राप्तदोषोपि सर्वत्र निरुपद्रवः ॥ ११७ ॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ ११८ ॥
अर्थार्थी यानि कष्टानि मूढोयं सहते जनः ।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ ११९ ॥

अपरं विदेशवासजमपि वैराग्यं त्वया न कार्यम् । यतः ।

को धीरस्य मनस्विनः स्वविषयः को वै विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १२० ॥

अर्थहीनः परे देशे गतोपि यः प्रज्ञावान्भवति स कथंचिदपि न सीदति । उक्तं च ।

कोतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ १२१ ॥

तत्प्रज्ञानिधिर्भवान्न प्राकृतपुरुषतुल्यः । अपरं प्राप्तोप्यर्थः कर्मप्राप्त्या नश्यति । तदेतावन्ति दिनानि त्वदीयमासीत् । मुहूर्तमप्यनात्मीयं भोक्तुं न लभ्यते । स्वयमागतमपि विधिनापह्रियते ।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १२२ ॥

हिरण्यक आह । कथमेतत् । स आह ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## कथा ८.

अस्ति कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको वसति स्म। सोनेकविधपटरचनारञ्जितानि पार्थिवोचितानि सदैव वस्त्राण्युत्पादयति। परं तस्य चानेकविधपट्टरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमप्यर्थमात्रं संपद्यते। अथान्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसंपादनविज्ञानिनो महर्द्धिसंपन्नाः। तानवलोक्य स स्वभार्यामाह। प्रिये पश्यैतान्स्थूलपट्टकारकान्धनकनकसमृद्धान्। तदधारणकं ममैतत्स्थानम्। तदन्यत्रोपार्जनाय गच्छामि। सा प्राह। भोः प्रियतम मिथ्या प्रलपितमेतद्यदन्यत्र गतानां धनं भवति स्वस्थाने न भवति। उक्तं च।

उत्पतन्ति यदाकाशे निपतन्ति महीतले।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥ १२३ ॥

तथा च।

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति ॥ १२४ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२५ ॥

शेते सह शयानेन गच्छन्तमनुगच्छति।
नराणां प्राक्तनं कर्म तिष्ठति तु सहात्मना ॥ १२६ ॥

यथा छायातपौ नित्यं सुसंबद्धौ परस्परम्।
एवं कर्म च कर्ता च संश्लिष्टावितरेतरम् ॥ १२७ ॥

तस्मादत्रैव व्यवसायपरो भव। कौलिक आह। प्रिये न सम्यगभिहितं भवत्या। व्यवसायं विना न कर्म फलति। उक्तं च।

यथैकेन न हस्तेन तालिका संप्रपद्यते।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥ १२८ ॥

पश्य कर्मवशात्प्राप्तं भोज्यकालेपि भोजनम्।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथंचन ॥ १२९ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा च ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोत्र दोषः ॥ १३० ॥

तथा च ।

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य विशन्ति वदने मृगाः ॥ १३१ ॥
उद्यमेन विना राजन्न सिध्यन्ति मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ १३२ ॥
स्वशक्त्या कुर्वतः कर्म न चेत्सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १३३ ॥

तन्मयावश्यं देशान्तरं गन्तव्यम् । इति निश्चित्य वर्धमानपुरं गत्वा तत्र वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः । अथार्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्यटतो भगवान्रविरस्तमुपागतः । तत्र च व्यालभयात्स्थूलतरवटस्कन्ध आरुह्य प्रसुप्तो यावत्तिष्ठति तावन्निशीथे द्वौ पुरुषौ रौद्राकारौ परस्परं जल्पन्तावशृणोत् । तत्रैक आह । भोः कर्तः त्वं किं सम्यङ् वेत्सि यदस्य सोमिलकस्य भोजनाच्छादनादृतेधिका समृद्धिर्नास्ति । तत्किं त्वयास्य सुवर्णशतत्रयं दत्तम् । स आह । भोः कर्मन् मयावश्यं दातव्यं व्यवसायिनां तत्र च तस्य परिणतिस्त्वदायत्तेति ।

अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति तावद्रिक्तं पश्यति । ततः साक्षेपं चिन्तयामास । अहो किमेतत् । महता कष्टेनोपार्जितं वित्तं हेलया क्वापि गतम् । यद्व्यर्थश्रमोकिंचनः कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि । इति निश्चित्य तदेव पत्तनं गतः । तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोपि स्वस्थानं प्रति प्रस्थितः । यावदर्धपथे भूयोपि गतस्य भगवान्भानुरस्तं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

जगामाथ सुवर्णनाशभयात्सुश्रान्तोपि न विश्राम्यति केवलं कृतगृहो-
त्कण्ठः सत्वरं व्रजति । अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समा-
गच्छन्तौ जल्पन्तौ च शृणोति । तत्रैकः प्राह । भोः कर्तः किं त्वयै-
तस्य सुवर्णशतपञ्चकं दत्तम् । तत्किं न वेत्सि यद्भोजनाच्छादनाभ्य-
5 धिकमस्य किंचिन्नास्ति । स आह । भोः कर्मन् मयावश्यं देयं व्यव-
सायिनाम् । तस्य परिणामस्त्वदायत्तः । तत्किं मामुपालम्भयसि ।
तच्छ्रुत्वा सोमिलको यावद्ग्रन्थिमवलोकयति तावत्सुवर्णं नास्ति । ततः
परं दुःखमापन्नो व्यचिन्तयत् । अहो किं मम धनरहितस्य जीवि-
तेन । तदत्र वटवृक्ष आत्मानमुद्बध्य प्राणांस्त्यजामि । एवं निश्चित्य
10 दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं
निबध्य यावत्प्रक्षिपति तावदेकः पुमानाकाशस्थ एवेदमाह । भो भोः
सोमिलक मैवं साहसं कुरु । अहं ते वित्तापहारको न ते भोजना-
च्छादनाभ्यधिकं वराटिकामपि सहामि । तद्गच्छ स्वगृहं प्रति । अन्यच्च
भवदीयसाहसेनाहं तुष्टः । तथा मे न स्याद्व्यर्थं दर्शनम् । तत्प्रार्थ्य-
15 तामभीष्टो वरः कश्चित् । सोमिलक आह । यद्येवं तद्देहि मे प्रभूतं
धनम् । स आह । भोः किं करिष्यसि भोगरहितेन धनेन यतस्तव
भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति । उक्तं च ।

किं तया क्रियते लक्ष्म्या या वधूरिव केवला ।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १३४ ॥

20 सोमिलक आह । यद्यपि भोगो नास्ति तथापि भवतु मे धनम् ।
उक्तं च ।

कृपणोप्यकुलीनोपि सदा संश्रितमानुषैः ।
सेव्यते स नरो लोके यस्य स्याद्वित्तसंचयः ॥ १३५ ॥

तथा च ।

25 शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १३६ ॥

पुरुष आह । किमेतत् । सोब्रवीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## कथा ६.

कस्मिंश्चिदधिष्ठाने तीक्ष्णविषाणो नाम महावृषभो वसति । स च मदातिरेकात्परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन्स्वेच्छया मरकतसदृशानि शष्पाणि भक्षयन्नरण्यचरो बभूव । अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म । स कदाचित्स्वभार्यया सह नदीतीरे सुखोपविष्टस्तिष्ठति । अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव पुलिनमवतीर्णः । ततश्च तस्य लम्बमानौ वृषणावालोक्य शृगाल्या शृगालोऽभिहितः । स्वामिन् पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ । ततः क्षणेन प्रहरेण वा पतिष्यतः । एवं ज्ञात्वा भवता पृष्ठयायिना भाव्यम् । शृगाल आह । प्रिये न ज्ञायते कदाचिदेतयोः पतनं भविष्यति वा न वा । तत्किं वृथा श्रमाय मां नियोजयसि । अत्रस्थस्तावज्जलार्थमागतान्मूषकान्भक्षयिष्यामि समं त्वया मार्गोऽयं यतस्तेषाम् । अथ यदा त्वां मुक्त्वास्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि तदागत्यान्यः कश्चिदेतत्स्थानं समाश्रयिष्यति । नैतद्युज्यते कर्तुम् । उक्तं च ।

> यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
> ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १३७ ॥

शृगाल्याह । भोः कापुरुषस्त्वं यत्किंचित्प्राप्तं तेनापि संतोषं करोषि । उक्तं च ।

> सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः ।
> सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १३८ ॥

तस्मात्पुरुषेण सदैवोत्साहवता भाव्यम् । उक्तं च ।

> यत्रोत्साहसमारम्भो यत्रालस्यविनिग्रहः ।
> नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १३९ ॥

> तद्दैवमिति संचिन्त्य त्यजेन्नोद्योगमात्मनः ।
> अनुद्योगं विना तैलं तिलानां नोपजायते ॥ १४० ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यच्च ।

य: स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः ।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ १४१ ॥

यच्च त्वं वदसि । एतौ पतिष्यतो न वेति । तदप्ययुक्तम् । उक्तं च ।

5 कृतनिश्चयिनो वन्द्यास्तुङ्गिमा नोपभुज्यते ।
चातकः को वराकोयं यस्येन्द्रो वारिवाहकः ॥ १४२ ॥

अपरं मूषकमांसस्य निर्विण्णाहम् । एतौ च मांसपिण्डौ पतनप्रायौ दृश्येते । तत्सर्वथा नान्यथा कर्तव्यमिति । अथासौ । तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत् । अथवा

10 साध्विदमुच्यते ।

तावत्स्यात्सर्वकृत्येषु पुरुषोत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ध्रियते बलात् ॥ १४३ ॥

अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ १४४ ॥

15 एवं स तस्य पृष्ठतः सभार्यः परिभ्रमंश्चिरकालमनयत् । न च तयोः पतनमभूत् । ततश्च निर्वेदात्पञ्चदशे वर्षे शृगालः स्वभार्यामाह ।

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १४५ ॥

तयोस्तत्पश्चादपि पातो न भविष्यति । तत्तदेव स्वस्थानं गच्छावः ।

20 अतोहं ब्रवीमि ।

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १४६ ॥

पुरुष आह । यद्येवं तद्गच्छ भूयोपि वर्धमानपुरम् । तत्र द्वौ वणिक्पुत्रौ वसतः । एको गुप्तधनः । द्वितीय उपभुक्तधनः । ततस्तयोः

25 स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः । यदि ते धनेन प्रयोजनमभक्षितेन ततस्त्वामपि गुप्तधनं करोमि । अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमीति । एवमुक्त्वादर्शनं गतः । सोमिलकोपि वि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मितमना भूयोपि वर्धमानपुरं गतः । अथ संध्यासमये श्रान्तः कथ-मपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन्कृच्छ्राल्लब्ध्वास्तमितसूर्ये प्रविष्टः । अथासौ भार्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद्गृहं प्रविश्योप-विष्टः । ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किंचिदशनं दत्तम् । ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तावपि द्वौ 5 पुरुषौ परस्परं मन्त्रयतः । तत्रैक आह । भोः कर्तः किं त्वयास्य गुप्तधनस्यान्योधिको व्ययो निर्मितो यत्सोमिलकस्यानेन भोजनं दत्तम् । तदयुक्तं त्वया कृतम् । स आह । भोः कर्मन् न ममात्र दोषः । मया पुरुषस्य लाभप्राप्तिर्दातव्या । तत्परिणतिः पुनस्त्वदायत्तेति । अथासौ यावदुत्तिष्ठति तावद्गुप्तधनो विसूचिकया खिद्यमानो रुजाभिभूतः क्षणं 10 तिष्ठति । ततो द्वितीयेह्नि तद्दोषेण कृतोपवासः संजातः । सोमिलकोपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः । तेनापि चाभ्युत्थानादिना सत्कृतो विहितभोजनाच्छादनसंमानस्तस्यैव गृहे भव्यशय्यामारुह्य सु-ष्वाप । ततश्च निशीथे यावत्पश्यति तावत्तावेव द्वौ पुरुषौ मिथो मन्त्र-यतः । अत्र तयोरेक आह । भोः कर्तः अनेन सोमिलकस्योपकारं 15 कुर्वता प्रभूतो व्ययः कृतः । तत्कथय कथमस्योद्धारकविधिर्भविष्यति । अनेन सर्वमेतद्व्यवहारकगृहात्समानीतम् । स आह । भोः कर्मन् मम कृत्यमेतत् । परिणतिस्त्वदायत्तेति । अथ प्रभातसमये राजपुरुषो राज-प्रसादजं वित्तमादाय समायात उपभुक्तधनाय समर्पयामास । तद्दृष्ट्वा सोमिलकश्चिन्तयामास । संचयरहितोपि वरमेष उपभुक्तधनो नासौ 20 गुप्तधनः । उक्तं च ।

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ १४७ ॥

तद्विधाता मां दत्तभुक्तधनं करोतु । न कार्यं मे गुप्तधनेन । ततः सोमिलको दत्तभुक्तधनः संजातः । अतोहं ब्रवीमि । 25

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १४८ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

तद्भद्र हिरण्यक एवं ज्ञात्वा धनविषये संतापो न कार्यः । अथ विद्यमानमपि धनं भोज्यवन्ध्यतया तदविद्यमानं मन्तव्यम् । उक्तं च ।

गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १४९ ॥

5 तथा च ।

उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १५० ॥

अन्यच्च ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
10 यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १५१ ॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं वित्तोपार्जनं कर्तव्यं यतो दुःखाय तत् । उक्तं च ।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १५२ ॥
15 पीयूषमिव संतोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसंतोषवतां पुनः ॥ १५३ ॥
निरोधाच्चेतसोक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैः संछन्नाः स्युर्गभस्तयः ॥ १५४ ॥
वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
20 वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १५५ ॥
अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
wealth स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥ १५६ ॥
धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १५७ ॥

25 दानेन तुल्यो विधिरस्ति नान्यो
लोभाच्च नान्योस्ति परः पृथिव्याम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विभूषणं शीलसमं न चान्यत्
संतोषतुल्यं धनमस्ति नान्यत् ॥ १५८ ॥

दारिद्र्यस्य परा मूर्तिर्यन्मानद्रविणाल्पता ।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥ १५९ ॥

एवं ज्ञात्वा भद्र त्वया संतोषः कार्य इति । मन्थरकवचनमाकर्ण्य 5
वायस आह । भद्र मन्थरको यदेवं वदति तत्त्वया चित्ते कर्तव्यम् ।
अथवा साध्विदमुच्यते ।

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १६० ॥

अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः ॥ १६१ ॥ 10

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मि-
न्नेव सरसि प्रविष्टः । अथायान्तं ससंभ्रममवलोक्य लघुपतनको वृक्ष-
मारूढः । हिरण्यकः शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयमा-
स्थितः । अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच । 15
एह्येहि सखे मन्थरक मृगोयं तृषार्तोत्र समायातः सरसि प्रविष्टः ।
तस्य शब्दोयं न मानुषसंभव इति । तच्छ्रुत्वा मन्थरको देशकालोचि-
तमाह । भो लघुपतनक यथायं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नु-
द्भ्रान्तदृष्ट्या पृष्ठतोवलोकयति तन्न तृषार्त एष नूनं लुब्धकत्रासितः ।
तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वेति । उक्तं च । 20

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः ।
दिशोवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित् ॥ १६२ ॥

तच्छ्रुत्वा चित्राङ्ग आह । भो मन्थरक ज्ञातं त्वया सम्यङ्मे त्रास-
कारणम् । अहं लुब्धकशरप्रहारादुद्धारितः कृच्छ्रेणात्र समायातः ।
मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति । तच्छरणागतस्य मे दर्शय 25
किंचिदगम्यं स्थानं लुब्धकानाम् । तदाकर्ण्य मन्थरक आह । भोश्चि-
त्राङ्ग श्रूयतां नीतिशास्त्रम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः ॥ १६३ ॥

तद्गम्यतां शीघ्रं घनं वनं यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः । अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच । भो मन्थरक
5 गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः । तच्चित्राङ्ग त्वं विश्रब्धो जलाद्बहिर्भव । ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन्सरसि मध्याह्नसमये वृक्षच्छायाधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति । अथवा युक्तमेतदुच्यते ।

सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकम् ।
10 विनापि संगमं स्त्रीणां कवीनां सुखमेधते ॥ १६४ ॥

तथा च ।

सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य संपुटिका नास्ति कुतस्तस्य सुभाषितम् ॥ १६५ ॥

अथैकस्मिन्नहनि गोष्ठीसमये मृगो नायातः । अथ ते व्याकुलीभूताः
15 परस्परं जल्पितुमारब्धाः । अहो किमद्य सुहृन्न समायातः । किं सिंहादिभिः क्वचिद्व्यापादित उत लुब्धकैरथवानले प्रपतितो गर्ताविषमे वा नवतृणलौल्यादिति । अथवा साध्विदमुच्यते ।

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥ १६६ ॥

20 अथ मन्थरको वायसमाह । भो लघुपतनक अहं हिरण्यकश्च तावद्द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात् । तद्गत्वा त्वमरण्यं शोधय यदि कुत्रचित्तं जीवन्तं पश्यसीति । तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति । तं दृष्ट्वा शोकव्याकुलितमनास्तमवोचत् । भद्र किमिदम् ।
25 चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथवा युक्तमेतत् ।

> अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात् ।
> प्रायेण प्राणिनां भूयो दुःखावेगोधिको भवेत् ॥ १६७ ॥

ततश्च बाष्पावसाने चित्राङ्गो लघुपतनकमाह । भो मित्र संजातोयं तावन्मम मृत्युः । तच्चुक्तं संपन्नं यद्भवता सह मे दर्शनं संजातम् । उक्तं च । 5

> प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
> तद्द्वाभ्यां सुखदं पश्चाज्जीवतोपि मृतस्य च ॥ १६८ ॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ ।

10

> अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
> मया तत्क्षम्यतामद्य द्वाभ्यामपि प्रसादतः ॥ १६९ ॥

तच्छ्रुत्वा लघुपतनक आह । भद्र न भेतव्यमस्मद्विधैर्मित्रैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तं च । 15

> संपदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
> तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १७० ॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य । यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोपि सत्वरं चित्राङ्गसमीपे 20 गतः । सोपि मूषकमवलोक्य किंचिज्जीविताशया संश्लिष्ट आह ।

> आपन्नाशाय विबुधैः कर्तव्याः सुहृदोमलाः ।
> न तरत्यापदं कश्चिद्योत्र मित्रविवर्जितः ॥ १७१ ॥

हिरण्यक आह । भद्र त्वं तावन्नीतिशास्त्रज्ञो दक्ष इति । तत्कथमत्र कूटपाशे पतितः । स आह । भो न कालोयं विवादस्य । तन्न 25 यावत्स पापात्मा लुब्धकः समभ्येति तावद्द्रुततरं कर्तयेमं मत्पादपाशम् । तदाकर्ण्य विहस्याह हिरण्यकः । किं मय्यपि समायाते लुब्धकाद्बिभेषि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततः शास्त्रं प्रति महती मे विरक्तिः संपन्ना यद्भवद्विधा अपि नीतिशास्त्रविद एतामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि । स आह । भद्र कर्मणा बुद्धिरपि हन्यते । उक्तं च ।

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
5 बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १७२ ॥

विधात्रा रचिता या सा ललाटेक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वशक्त्याप्यतिपण्डिताः ॥ १७३ ॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसंतप्तहृदयो मन्थरकः शनैःशनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह । अहो न शोभ-10 नमापतितम् । हिरण्यक आह । किं स लुब्धकः समायाति । स आह । आस्तां तावल्लुब्धकवार्त्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामो यदि स पापात्मा लुब्धकः समागमिष्यति । तदहं तावत्खमुत्पतिष्यामि । त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि । चित्राङ्गोपि वेगेन दिगन्तरं 15 यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोस्मि । अत्रान्तरे प्राप्तोयं मन्थरकः । हिरण्यक आह । भद्र न युक्तमनुष्ठितं भवता यदत्र समायातः । तद्भूयोपि द्रुततरं गम्यतां यावदसौ लुब्धको न समायाति । मन्थरक आह । भद्र किं करोमि । न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाघं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते ।

20 दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः ।
यदि सुमहौषधकल्पो वयस्यजनसंगमो न स्यात् ॥ १७४ ॥

एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोप्युपागतः । तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात्खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन्प्रधावितः । लघुपतनको वृक्षमारूढः । हिर-25 ण्यकश्च समीपवर्ति बिलं प्रविष्टः । अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दंमन्दं स्थलमध्ये गच्छन्तं दृष्टवान् । अचिन्तयच्च । यद्यपि कुरंगो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संपादितः । तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति । एवं विचिन्त्य तं दर्भैः संछाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः । अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत् । कष्टं भोः कष्टमापतितम् ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १७५ ॥ 5

यदि तावत्कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम् । अपरमपि मित्रं परं मन्थरकसमं 10 न स्यात् । उक्तं च ।

असंपत्तौ परो लाभो गुह्यस्य कथनं तथा ।
आपद्विमोक्षणं चैव मित्रस्यैतत्फलत्रयम् ॥ १७६ ॥

तदस्य पश्चान्नान्यः सुहृन्मे । तत्किं ममोपर्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः । यत आदौ तावद्वित्तनाशस्ततः परिवारभ्रंशस्ततो 15 देशत्यागस्ततो मित्रवियोग इति । अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य । उक्तं च ।

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादभङ्गुरम् ॥ १७७ ॥

तथा च । 20

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
च्छिद्रेष्वनर्था बहुलीभवन्ति ॥ १७८ ॥

अहो साधूक्तं केनापि । 25

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १७९ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रान्तर आक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ। अथ हिरण्यक आह। अहो किं वृथाप्रलपितेन। तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते तावदस्य मोक्षोपायश्चिन्त्यतामिति। उक्तं च।

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्।
5 क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति॥ १८०॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम्॥ १८१॥

अन्यच्च।

अतीतलाभस्य च रक्षणार्थं
10 भविष्यलाभस्य च संगमार्थम्।
आपत्प्रपन्नस्य च मोक्षणार्थं
यन्मन्त्र्यतेसौ परमो हि मन्त्रः॥ १८२॥

तच्छ्रुत्वा वायस आह। भो यद्येवं तत्क्रियतां मद्वचः। एष चित्राङ्गोस्य मार्गे गत्वा किंचित्पल्वलमासाद्य तस्य तीरे निश्चेतनो भूत्वा
15 पततु। अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखिष्यामि येनासौ लुब्धकोमुं मृतं मत्वा मम चञ्चुप्रहारप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थे धावति। अत्रान्तरे त्वया दर्भमयबन्धनवेष्टनानि खण्डनीयानि येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति। चित्राङ्गः प्राह। भो भद्रोयं दृष्टो मन्त्रस्त्वया। नूनं मन्थरको मुक्तो
20 मन्तव्यः। उक्तं च।

सिद्धिं वा यदि वासिद्धिं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्वजन्तूनां प्राज्ञो वेत्ति न चेतरः॥ १८३॥

तत्तदेवं क्रियताम्। तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमद्राक्षीत्। तं दृष्ट्वा हर्षितमना व्यचि-
25 न्तयत्। नूनं पाशवेदनया वराकोयं मृगो गत्वायुःशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं प्रविष्टो यावन्मृतः। तद्वश्योयं मे कच्छपः सुयन्त्रितत्वात्। तदेनमपि तावद्गृह्णामीत्यवधार्य कच्छपं भूतले

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रक्षिप्य मृगमुपाद्रवत् । अत्रान्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहारेण तद्दर्भवेष्टनं तत्क्षणात्खण्डशः कृतम् । मन्थरकोपि तृणमध्यान्निष्क्रम्य पल्वलं प्रविष्टः । चित्राङ्गोप्यप्राप्तस्यापि तस्योत्थाय वायसेन सह द्रुतं प्रनष्टः । अत्रान्तरे विलक्षो विषादपरो निवृत्तो लुब्धको यावत्पश्यति तावत्कच्छपोपि गतः । ततश्च तत्रोपविश्येमं श्लोकमपठत् । 5

प्राप्तो बन्धनमप्ययं गुरु मृगस्तावत्त्वया मे हृतः
संप्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः ।
क्षुत्क्षामोत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यत्स्वामिन्न कृतं कृतान्त कुरु रे तत्रापि सज्जोस्म्यहम् ॥१८४॥

एवं बहुविधं विलप्य स्वगृहं गतः । अथ तस्मिन्दूरीभूते सर्वेपि ते 10 काककूर्ममृगाखवः परमानन्दभाजो मिलित्वा परस्परमालिङ्ग्य पुनर्जातानिवात्मनो मन्यमानास्तदेव सरः प्राप्य महासुखेन सुभाषितगोष्ठीविनोदं कुर्वन्तः कालं नयन्ति स्म । एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्यः । तथा मित्रेण सहाव्याजेन वर्तितव्यम् । उक्तं च ।

यो मित्राणि करोत्यत्र कौटिल्येन न वर्तते । 15
स दुःखं न पराभूतेः प्राप्नोति हि कथंचन ॥ १८५ ॥

॥ समाप्तं चेदं मित्रसंप्राप्त्यभिधानं द्वितीयं तन्त्रम् ॥

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथेदमारभ्यते काकोलूकीयं नाम तृतीयं तन्त्रं यस्यायमादिमः श्लोकः ।

न विश्वसेत्पूर्वविरोधितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
5 दग्धां गुहां पश्य उलूकपूर्णां
काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते ।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य समीपेनेकखगसनाथोतिघनतरपत्त्रच्छन्नो महान्न्यग्रोधपादपस्तिष्ठति । तत्र 10 मेघवर्णो नाम वायसराजोनेककाकपरिवारः प्रतिवसति स्म । स तत्र विहितदुर्गरचनः सपरिजनः कालं नयति । अथान्योरिमर्दनो नामोलूकराजोसंख्योलूकपरिवृतो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म । स च रात्रावागत्य तस्य न्यग्रोधस्य समन्तात्परिभ्रमति । यं कंचिद्वायसमासादयति तं व्यापादयति । एवं नित्याभिगमनाच्छनैःशनैस्तन्न्यग्रो- 15 धपादपदुर्गं निर्वायसं कृतम् । अथवा भवत्येवम् । यतः ।

य उपेक्षेत शत्रुं स्वं प्रचरन्तं यदृच्छया ।
रोगं वालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

तथा च ।

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत् ।
20 महाबलोपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३ ॥

अथान्येद्युः स वायसराजः सर्वान्सचिवानाहूय प्रोवाच । भो उलूकस्तावदस्माकं शत्रुरुद्यमसंपन्नश्च कालविन्नित्यमेव निशागमे समेत्य व्यापादनं करोति । तत्कथमस्य प्रतिविधातव्यम् । वयं तावद्रात्रौ न 25 पश्यामो न च तस्य दुर्गं विजानीमो येन गत्वा प्रहरामः । तदत्र किं युज्यते संधिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमस्य क्रियमाणस्य । अथ ते प्रोचुः । युक्तमभिहितं देवेन यदेष प्रश्नः कृतः । उक्तं च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपृष्टेनापि वक्तव्यं सचिवेनात्र किंचन ।
पृष्टेन त्वरितं पथ्यं वाच्यं च प्रियमप्रियम् ॥ ४ ॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहम् ।
मन्त्री च प्रियवक्ता च केवलं स रिपुः स्मृतः ॥ ५ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः । 5
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ६ ॥
तस्मादेकान्तमासाद्य मन्त्रः कार्यो महीपते ।
येन तस्य वयं कुर्मो निग्रहं कारणं तथा ॥ ७ ॥

अथ तस्यान्वयगताः पञ्च सचिवाः । तद्यथा नामानि । उज्जीवी संजीव्यनुजीवी प्रजीवी चिरंजीवी च । स तेषामादौ तावदुज्जीविनं 10 पृष्टवान् । भद्र एवं स्थिते किं मन्यते भवान् । स आह । राजन् बलवता सह विग्रहो न कार्यः । यतः स बलवान्कालप्रहर्ता च तस्मात्संधेयः । उक्तं च ।

बलीयसि प्रणमतां काले प्रहरतामपि ।
संपदो नापगच्छन्ति प्रतीप इव निम्नगाः ॥ ८ ॥ 15
सत्याढ्यो धार्मिकश्चार्यो भ्रातृसंघातवान्बली ।
अनेकविजयी चैव संधेयः स रिपुर्भवेत् ॥ ९ ॥
संधिः कार्योऽप्यनार्येण विज्ञाय प्राणसंशयम् ।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम् ॥ १० ॥

योऽनेकयुद्धविजयी स तेन विशेषात्संधेयः । उक्तं च । 20

अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत्प्रभावेन तस्याशु वशमायान्त्यरातयः ॥ ११ ॥
संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि ।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः ॥ १२ ॥
संदिग्धो विजयो नित्यं द्यूतेनापि हि युद्ध्यताम् । 25
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत् ॥ १३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असंदधानो मानान्धः समेनापि हतो भृशम् ।
आमकुम्भ इवान्येन करोत्युभयसंक्षयम् ॥ १४ ॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे ।
दृषत्कुम्भमिवाभित्त्वा तावत्तिष्ठति शक्तिमान् ॥ १५ ॥
भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १६ ॥
खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् ।
प्राप्नोति नखभङ्गं हि फलं वा मूषको भवेत् ॥ १७ ॥
तस्मान्न स्यात्फलं यत्र पुष्टं युद्धं च केवलम् ।
न हि तत्स्वयमुत्पाद्यं कर्तव्यं च कथंचन ॥ १८ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाश्रयेत् ।
वाञ्छन्नभ्रंशिनीं लक्ष्मीं न भौजंगीं कदाचन ॥ १९ ॥ वृत्तिं
कुर्वन्हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम् ।
भुजंगवृत्तिः प्राप्नोति वधमेव हि केवलम् ॥ २० ॥
कूर्मसंकोचमास्थाय प्रहारानपि मर्षयेत् ।
कालेकाले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ २१ ॥
आगतं विग्रहं दृष्ट्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसा न समुत्पतेत् ॥ २२ ॥

तथा च ।

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ २३ ॥

एवमुज्जीवी साममन्त्रं संधिकारकं विज्ञप्तवान् । अथ तच्छ्रुत्वा संजीविनमाह । भद्र तवाभिप्रायं श्रोतुमिच्छामि । स आह । देव न ममैतत्प्रतिभाति यच्छत्रुणा सह संधानं क्रियते । उक्तं च ।

शत्रुणा न हि संदध्यात्सुश्लिष्टेनापि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २४ ॥

अपरं च स क्रूरो लुब्धो धर्मरहितः । तत्त्वया विशेषादसंधेयः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उक्तं च ।

सत्यधर्मविहीनेन न संदध्यात्कथंचन ।
सुसंधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ २५ ॥

तस्मात्तेन योद्धव्यमिति मे निश्चयः । उक्तं च ।

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखोच्छेद्यो भवेद्रिपुः ॥ २६ ॥

अपरं पराभूतास्तेन वयम् । तद्यदि संधानं करिष्यथ तद्भूयोऽपि काकविनाशं करिष्यति । उक्तं च ।

चतुर्थोपायसाध्ये तु शत्रौ सान्त्वमपक्रिया ।
स्वेद्यमानज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ २७ ॥

सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २८ ॥

यच्चैतद्वदति देवो रिपुर्बलवांस्तदप्यकारणम् । उक्तं च ।

प्रमाणाभ्यधिकस्यापि महत्सत्त्वमधिष्ठितः ।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ २९ ॥

उत्साहशक्तिसंपन्नो हन्याच्छत्रुं लघुर्गुरुम् ।
यथा कण्ठीरवो नागं भारद्वाजाः प्रचक्षते ॥ ३० ॥

मायया शत्रवो वध्या अधिकाः स्युर्बलेन ये ।
यथा स्त्रीरूपमास्थाय हता भीमेन कीचकाः ॥ ३१ ॥

तथा च ।

मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः ।
सर्वंसहं तु मन्यन्ते तृणाय रिपवश्च तम् ॥ ३२ ॥

न जातु शमनं यस्य तेजस्तेजस्वितेजसाम् ।
वृथाजातेन किं तेन मातुर्यौवनहारिणा ॥ ३३ ॥

या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः ।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनाम् ॥ ३४ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रिपुरक्तेन संसिक्ता तत्स्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीविते ॥ ३५ ॥

एवं संजीवी विग्रहमन्त्रं विज्ञापयामास । अथ तच्छ्रुत्वानुजीविनमाह । भद्र त्वमपि स्वाभिप्रायं वद । स आह । देव दुष्टः स बलाधिको 5 निर्मर्यादश्च । तत्र तेन न संधिर्न विग्रहो युक्तः । केवलं यानमर्हं स्यात् । उक्तं च ।

बलोत्कृष्टेन दुष्टेन मर्यादारहितेन च ।
न संधिर्विग्रहो नैव विना यानं प्रशस्यते ॥ ३६ ॥
द्विधाकारं भवेद्यानं भये प्राणार्थरक्षणम् ।
10 एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३७ ॥
कार्त्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३८ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्तिताः ।
व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३९ ॥
15 स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत्प्रणिधिव्याप्तमग्रतः ॥ ४० ॥
अज्ञातवीवधासारतोयसस्यो व्रजेत्तु यः ।
परराष्ट्रं न भूयः स स्वराष्ट्रमपि गच्छति ॥ ४१ ॥

तत्ते युक्तं कर्तुमपसरणम् । अन्यच्च ।

20 तत्र युक्तं प्रभो कर्तुं द्वितीयं यानमेव च ।
न विग्रहो न संधानं बलिना तेन पापिना ॥ ४२ ॥

अपरं कारणापेक्षया सरणं क्रियते बुधैः । उक्तं च ।

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरतिकोपात्संकुचत्युत्पतिष्णुः ।
25 हृदयनिहितभावा गूढमन्त्रप्रचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यच्च ।

बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः ।
युधिष्ठिर इवाप्नोति पुनर्जीवन्स मेदिनीम् ॥ ४४ ॥
युध्यतेहंकृतिं कृत्वा दुर्बलो यो बलीयसा ।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४५ ॥

5

तद्बलवताभियुक्तस्यापसरणसमयोयं न संधिर्विग्रहश्च । एवमनुजीविमन्त्रोपसरणस्य । अथैतदाकर्ण्य प्रजीविनमाह । भद्र त्वमप्यात्मनोभिप्रायं वद । स आह । देव मम संधिविग्रहयानान्यपि त्रीण्येव न प्रतिभान्ति विशेषतश्चासनम् ।

उक्तं च ।

10

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ ४६ ॥

अन्यच्च ।

अभियुक्तो बलवता दुर्गे तिष्ठेत्प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥ ४७ ॥

15

यो रिपोरागमं श्रुत्वा भयसंत्रस्तमानसः ।
स्वस्थानं हि त्यजेत्तत्र न तु भूयो विशेच्च सः ॥ ४८ ॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
स्थानहीनस्तथा राजा गम्यः स्यात्सर्वजन्तुषु ॥ ४९ ॥
निजस्थानस्थितोप्येकः शतं योद्धुं सहेन्नरः ।

20

बलिनामपि शत्रूणां तस्मात्स्थानं न संत्यजेत् ॥ ५० ॥
तस्माद्दुर्गं दृढं कृत्वा वीवधासारसंयुतम् ।
प्राकारपरिखायुक्तं यन्त्रादिभिरलंकृतम् ॥ ५१ ॥
तिष्ठेन्मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन्संप्राप्स्यति राज्यं मृतो वा स्वर्गमेष्यति ॥ ५२ ॥

25

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यच्च ।

बलिनापि न बाध्यन्ते लघवोऽप्येकसंश्रयाः ।
प्रभञ्जनविपक्षेण यथैकस्था महीरुहाः ॥ ९३ ॥
महानप्येकजो वृक्षः सर्वतः सुप्रतिष्ठितः ।
सुमन्देनापि वातेन शक्यो धूनयितुं यतः ॥ ९४ ॥
एवं मनुष्यमप्येकं शौर्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम् ॥ ९५ ॥

एवं प्रजीविमन्त्रः । इदमासनसंज्ञकम् । एतत्समाकर्ण्य चिरंजीविनमाह । भद्र त्वमपि स्वाभिप्रायं वद । स आह । देव षाड्गुण्यमध्ये मम संश्रयः प्रतिभाति । तस्यानुष्ठानं कार्यम् । उक्तं च ।

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ९६ ॥

तदत्रैव स्थितेन त्वया कश्चित्समर्थ आश्रयणीयो यो विपत्प्रतीकारं करोति । यदि पुनस्त्वं तव स्थानं त्यक्त्वा प्रयास्यसि तत्कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति । उक्तं च ।

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति गौरवम् ॥ ९७ ॥

अथवा नैष एकान्तो यद्बलिनमेकं समाश्रयेत् । लघूनामपि संश्रयो रक्षायै भवति । उक्तं च ।

संघातवान्यथा वेणुर्निबिडैर्वेणुभिर्वृतः ।
न शक्यते समुच्छेत्तुं दुर्बलोऽपि तथा नृपः ॥ ९८ ॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः ।
ते न रौद्रानिलेनापि हन्यन्तेऽन्योन्यसंश्रयात् ॥ ९९ ॥
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य इव वातेन शक्यः स्यादपि मर्दितुम् ॥ ६० ॥

यदि पुनरुत्तमे संश्रयो भवति तत्किमुच्यते । उक्तं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महाजनस्य संपर्कः कस्य नोन्नतिकारकः ।
पद्मपत्त्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ६१ ॥

ततः संश्रयं विना न कश्चित्प्रतीकारो भवति । तस्मात्संश्रयात्कार्यो विग्रह इति मेभिप्रायः । एवं चिरंजीविमन्त्रः । अथैवं तेनाभिहिते स मेघवर्णो राजा चिरंतनं पितृसचिवं दीर्घायुषं सकलनीतिपारं गतं स्थिरजीविनामानं प्रणम्य प्रोवाच । तात यदेते मया पृष्टाः सचिवास्तावदत्र स्थितस्यापि तव तत्परीक्षार्थं येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि । तद्यद्युक्तं भवति तत्समादेश्यम् । स आह । वत्स सर्वैरप्येतैर्नीतिशास्त्राश्रयमुक्तं सचिवैः । तदुपयुज्यते स्वकाले । परमेष द्वैधीभावस्य कालः । उक्तं च ।

अविश्वासं सदा तिष्ठेत्संधिना विग्रहेण च ।
द्वैधीभावं च संश्रित्य पार्श्वे शत्रोर्बलीयसः ॥ ६२ ॥

तच्छत्रुं विश्वास्य विश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते रिपुः । उक्तं च ।

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा ।
गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ ६३ ॥

तथा च ।

स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।
यो भवेदेकभावोत्र न स जीवति मानवः ॥ ६४ ॥

कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा ।
एकभावेन कर्तव्यं शेषं द्विर्भावमाश्रितैः ॥ ६५ ॥

एको भावः सदा शस्तो यतीनां भावितात्मनाम् ।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम् ॥ ६६ ॥

तद्द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति लोभाश्रयाच्च शत्रुमुच्चाटयिष्यसि । अपरं यदि किंचिच्छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि । मेघवर्ण आह । तात मयाविदितः संश्रयस्तस्य ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्कथं छिद्रं ज्ञायते तस्य । स्थिरजीव्याह । वत्स न केवलं स्थानं छिद्राण्यपि तस्य प्रकटीकरिष्यामि प्रणिधिभिः । उक्तं च ।

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति वै द्विजाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ६७ ॥

5 उक्तं चात्र विषये ।

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः ।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात् ॥ ६८ ॥

मेघवर्ण आह । तात कानि तीर्थान्युच्यन्ते कतिसंख्यानि च । कीदृशा गुप्तचराः । तत्सर्वं निवेद्यतामिति । स आह । अत्र विषये 10 भगवता नारदेन युधिष्ठिरः प्रोक्तः । यच्छत्रुपक्षेष्टादश तीर्थानि स्वपक्षे पञ्चदश । त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि । तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति । उक्तं च नारदेन युधिष्ठिरं प्रति ।

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ६९ ॥

15 तीर्थशब्देनायुक्तकर्माभिधीयते । तद्यदि तेषां कुत्सितं भवति तत्स्वामिनोभिघाताय । प्रधानं भवति तद्वृद्धये स्यादिति । तद्यथा । मन्त्री पुरोहितः सेनापतिर्युवराजो दौवारिकोन्तर्वासिकः प्रशासकः समाहर्तृसंनिधातृप्रदेष्टृज्ञापकाः साधनाध्यक्षो गजाध्यक्षः कोशाध्यक्षो दुर्गपालकरपालसीमापालप्रोत्कटभृत्याः । एषां भेदेन द्राग्रिपुः साध्यते । 20 स्वपक्षे च देवी जननी कञ्चुकी मालिकः शय्यापालकः स्पाशः सांवत्सरिको भिषग्जलवाहकस्ताम्बूलवाहकाचार्याङ्गरक्षकः स्थानचिन्तकश्छत्त्रधरो विलासिनी । एषां वैरद्वारेण स्वपक्षे विघातः । तथा च ।

वैद्यसांवत्सरिकाचार्याः स्वपक्षेधिकृताश्चराः ।
यथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥ ७० ॥

25 तथा च ।

कृत्वा कृत्यविदस्तीर्थैरन्तः प्रणिधयः पदम् ।
विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ ७१ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं मन्त्रिवाक्यमाकर्ण्यात्रान्तरे मेघवर्ण आह । तात अथ किंनिमित्तमेवंविधं प्राणान्तिकं सदैव वायसोलूकानां वैरम् । स आह । वत्स कदाचिद्धंसशुकबककोकिलचातकोलूकमयूरकपोतपारावतविष्किरप्रभृतयः सर्वेपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः । अहो अस्माकं वैनतेयो राजा स च तावच्छ्रीवासुदेवासक्तो नास्माकं कामपि चिन्तां करोति । तत्किं तेन वृथास्वामिना यो लुब्धकपाशैर्नित्यं निबध्यमानानां न रक्षां विधत्ते । उक्तं च । 5

यो न रक्षति वित्रस्तान्पीड्यमानान्परैः सदा ।
जन्तून्पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७२ ॥
यदि न स्यान्नरपतिः सम्यङ्नेता इमाः प्रजाः । 10
अकर्णधारा पुरुषा विप्लवन्ते ह नौरिव ॥ ७३ ॥
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७४ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ७५ ॥ 15

तत्संचिन्त्यान्यः कश्चिद्राजा विहंगमानां क्रियतामिति । अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितम् । यदेष उलूको राजास्माकं भविष्यति । तदानीयन्तां नृपाभिषेकसंबन्धिनः संभारा इति । अथ साधिते विविधतीर्थोदके प्रगुणीकृतेष्टोत्तरशतमूलिकासंघाते प्रदत्ते सिंहासने वर्तिते संप्तद्वीपवतीधरित्रीमण्डले प्रस्तारिते व्याघ्रचर्मण्यापूरितेषु हेमकुम्भेषु दीपेषु वाद्येषु च सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु पठत्सु वन्दिमुख्येषु वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु गीतपरे युवतीजन आनीतायामग्रमहिष्यां कृकालिकायामुलूकोभिषेकार्थं यावत्सिंहासन उपविशति तावत्कुतोपि वायसः समायातः । सोचिन्तयत् । अहो किमेष पक्षिमेलापको महोत्सवश्च । अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः । पक्षिणां मध्ये वायसश्चतुरः श्रूयते । उक्तं च । 20 25

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मम गृहमागत्य प्राप्तवरां रूपाढ्यां कन्यां दास्यति । तत्सकाशात्पुत्रो मे भविष्यति । तस्याहं सोमशर्मेति नाम करिष्यामि । ततस्तस्मिञ्जानुचलनयोग्ये संजातेहं पुस्तकं गृहीत्वाश्वशालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि । अत्रान्तरे सोमशर्मा मां दृष्ट्वा जनन्युत्सङ्गाज्जानुप्रचलनपरोश्वखुरासन्नवर्ती मत्समीपमागमिष्यति । ततोहं ब्राह्मणीं कोपाविष्टोभिधास्यामि । गृहाण तावद्बालकम् । सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति । ततोहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि । एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः । सक्तुभिः पाण्डुरतां गतः । अतोहं ब्रवीमि ।

> अनागतवतीं चिन्तामसंभाव्यां करोति यः ।
> स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥ ७२ ॥

सुवर्णसिद्धिराह । एवमेतत् । कस्ते दोषो यतः सर्वोपि लोभेन विडम्बितो बाध्यते । उक्तं च ।

> यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
> विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ७३ ॥

चक्रधर आह कथमेतत् । स आह ।

---

## कथा १०.

अस्ति कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म । तस्य पुत्रा वानरक्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म । अथ वानरयूथाधिपो यः स औशनसबार्हस्पत्यचाणक्यमतवित्तदनुष्ठाता च तान्सर्वानप्यध्यापयति स्म । अथ तस्मिन्राजगृहे लघुकुमारवाहनयोग्यं मेषयूथमस्ति । तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं महानसे प्रविश्य यत्पश्यति तत्सर्वं भक्षयति । ते च सूपकारा यत्किंचित्काष्ठं मृन्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पद्यन्ति तेनाशु ताडयन्ति । सोपि वानरयूथपस्तद्दृष्ट्वा व्यचिन्तयत् । अहो मेषसूपकारकलहो

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्नस्वादलम्पटोयं मेषो महाकोपाश्च सूपकारा यथासन्नवस्तुना प्रह-
रन्ति । तद्यदि वस्तुनोभावात्कदाचिदुल्मुकेन ताडयिष्यन्ति तदूर्णा-
प्रचुरोयं मेषः स्वल्पेनापि वह्निना प्रज्वलिष्यति । तद्दह्यमानः पुनर-
श्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति । सापि तृणप्राचुर्याज्ज्वलिष्यति ।
5 ततोश्वा वह्निदाघमवाप्स्यन्ति । शालिहोत्रेण पुनरेतदुक्तम् । यद्वानर-
वसयाश्वानां वह्निदाघदोषः प्रशाम्यति । तन्नूनमेतेन भाव्यमत्र निश्चयः ।
एवं निश्चित्य सर्वान्वानरानाहूय रहसि प्रोवाच । यत्

मेषेण सूपकाराणां कलहो यत्र जायते ।
स भविष्यत्यसंदिग्धं वानराणां क्षयावहः ॥ ७४ ॥
10 तस्मात्स्यात्कलहो यत्र गृहे नित्यं विकारणः ॥
तद्गृहं जीवितं वाञ्छन्दूरतः परिवर्जयेत् ॥ ७५ ॥

तथा च ।

कलहान्तानि हर्म्याणि, कुवाक्यान्तं च सौहृदम् ।
कुराजान्तानि राष्ट्राणि, कुकर्मान्तं यशो नृणाम् ॥ ७६ ॥

15 तन्न यावत्सर्वेषां संक्षयो भवति तावदेतद्राजगृहं संत्यज्य वनं
गच्छामः । अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः
प्रहस्य प्रोचुः । भो भवतो वृद्धभावाद्बुद्धिवैकल्यं संजातं येनैतद्ब्रवीषि ।
उक्तं च ।

वदनं दशनैर्हीनं लाला स्रवति नित्यशः ।
20 न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ७७ ॥

न वयं स्वर्गसमानोपभोगान्नानाविधान्भक्ष्यविशेषान्राजपुत्रैः स्वह-
स्तदत्तानमृतकल्पान्परित्यज्य तत्राटव्यां कषायकटुतिक्तक्षाररूक्षफ-
लानि भक्षयिष्यामः । तच्छ्रुत्वाश्रुकलुषां दृष्टिं कृत्वा स प्रोवाच । रे
रे मूर्खा यूयमेतस्य सुखस्य परिणामं न जानीथ । किं पाकरसास्वा-
25 दनप्रायमेतत्सुखं परिणामे विषवद्भविष्यति । तदहं कुलक्षयं स्वयं
नावलोकयिष्यामि । सांप्रतं वनं यास्यामि । उक्तं च ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मित्रं व्यसनसंप्राप्तं स्वस्थानं परपीडितम् ।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ७८ ॥

एवमभिधाय सर्वांस्तान्परित्यज्य स यूथाधिपोऽटव्यां गतः । अथ तस्मिन्गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत्सूपकारेण नान्यत्किंचित्समासादितं तावदर्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां प्रत्यासन्नवर्तिन्यां प्रविष्टः । तत्र तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः केचिद्बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च हेषायमाणा धावमानाः सर्वमपि जनसमूहमाकुलीचक्रुः । अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान्वैद्यानाहूय प्रोवाच । भोः प्रोच्यतामेषामश्वानां कश्चिद्दाहोपशमनोपायः । तेऽपि शास्त्राणि संचिन्त्य प्रोचुः । देव प्रोक्तमत्र विषये भगवता शालिहोत्रेण यत् ।

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः ।
अश्वानां नाशमभ्येति तमः सूर्योदये यथा ॥ ७९ ॥

तत्क्रियतामेतच्चिकित्सितं द्राग्यावन्नैतेन दाहदोषेण विनश्यन्ति । सोऽपि तदाकर्ण्य समस्तवानरवधमादिष्टवान् । किं बहुना । सर्वेऽपि ते वानरा विविधायुधलकुटपाषाणादिभिर्व्यापादिता इति । अथ सोऽपि वानरयूथपस्तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः । स त्यक्ताहारक्रियो वनाद्वनं पर्यटति । अचिन्तयच्च । कथमहं तस्य नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि । उक्तं च ।

मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम् ।
भयाद्वा यदि वा कामात्स ज्ञेयः पुरुषाधमः ॥ ८० ॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता पद्मिनीषण्डमण्डितं सरः समासादितम् । तद्यावत्सूक्ष्मेक्षिकयावलोकयति तावद्वनचरमनुष्याणां पदपङ्क्तिप्रवेशोऽस्ति न निष्क्रमणम् । ततश्चिन्तितम् । नूनमत्र जलान्ते दुष्टग्राहेण भाव्यम् । तत्पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि । तथानुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य रत्नमालाविभू-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

षितकण्ठस्तमुवाच । भो अत्र यः सलिले प्रवेशं करोति स मे भक्ष्य
इति । तन्नास्ति धूर्ततरस्त्वत्समोन्यो यत्पानीयमनेन विधिना पिबसि ।
ततस्तुष्टोहम् । प्रार्थय हृदयवाञ्छितम् । कपिराह । भोः कियती ते
भक्षणशक्तिः । स आह । शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि
5 भक्षयामि । बाह्यतः शृगालोपि मां दूषयति । वानर आह । अस्ति मे
भूपतिना सहात्यन्तं वैरम् । यद्येनां रत्नमालां मे प्रयच्छसि तत्सपरि-
वारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि यथा प्रविशति
तथा करोमि । सोपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह ।
भो मित्र यत्समुचितं भवति तत्कर्तव्यमिति । वानरोपि रत्नमालाविभूषि-
10 तकण्ठो वृक्षप्रासादेषु परिभ्रमञ्जनैर्दृष्टः पृष्टश्च । भो यूथप भवानियन्तं
कालं कुत्र स्थितः । भवतेदृग्रत्नमाला कुत्र लब्धा या दीप्त्या सूर्यमपि
तिरस्करोति । वानरः प्राह । अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो
धनदनिर्मितम् । तत्र सूर्येर्धोदिते रविवारे यः कश्चिन्निमज्जति स धनं-
दप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति । अथ भूभुजा तदा-
15 कर्ण्य स वानरः समाहूतः पृष्टश्च । भो यूथाधिप किं सत्यमेतत् ।
रत्नमालासनाथं सरोस्ति क्वापि । कपिराह । स्वामिन् एष प्रत्यक्षतया
मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते । तद्यदि रत्नमालाप्रयोजनं तन्म-
या सह कमपि प्रेषय येन दर्शयामि । तच्छ्रुत्वा नृपतिराह । यद्येवं
तदहं सपरिजनः स्वयमेष्यामि येन प्रभूता रत्नमालाः संपद्यन्ते । वानर
20 आह । स्वामिन् एवं क्रियताम् । तथानुष्ठिते भूपतिना सह रत्नमाला-
लोभेन सर्वे कलत्रभृत्याः प्रस्थिताः । वानरोपि राज्ञा दोलाधिरूढेन
स्वोत्सङ्ग आरोपितः सुखेन प्रीतिपूर्वमानीयते । अथवा साध्विदमुच्यते ।

तृष्णे देवि नमस्तुभ्यं यया वित्तान्विता अपि ।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ ८१ ॥

25 तथा च ।

इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ८२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥ ८३ ॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच । देव अत्रार्धोदिते सूर्येऽत्र प्रविष्टानां सिद्धिर्भवति । तत्सर्वोऽपि जन एकदैव प्रविशतु । त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि । अथ प्रविष्टास्ते लोकाः सर्वे भक्षिता राक्षसेन । अथ तेषु चिरायमाणेषु राजा वानरमाह । भो यूथाधिप किमिति चिरायते मे जनः । तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच । भो दुष्टनरपते राक्षसेनान्तः सलिलस्थ स्थितेन भक्षितस्ते परिजनः । साधितं मया कुलक्षयजं वैरम् । तद्गम्यताम् । त्वं स्वामीति मत्वा नात्र प्रवेशितः । उक्तं च ।

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ८४ ॥

तत्त्वया मम कुलक्षयः कृतो मया पुनस्तवेति । अथैतदाकर्ण्य राजा शोकाविष्टः पदातिरेकाकी यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन्भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह ।

हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता ।
नालेनास्वादितं तोयं साधु भो वटवानर ॥ ८५ ॥

अतोऽहं ब्रवीमि ।

यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ८६ ॥

एवमुक्त्वा भूयोऽपि स चक्रधरमाह । भो मित्र प्रेषय मां येन स्वगृहं गच्छामि । चक्रधर आह । भद्र आपदर्थे धनमित्रसंग्रहः क्रियते । तन्मामेवंविधं त्यक्त्वा क्व यास्यसि । उक्तं च ।

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत् ।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम् ॥ ८७ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुवर्णसिद्धिराह । भोः सत्यमेतद्यदि गम्यस्थाने शक्तिर्भवति । एतत्पुनर्मनुष्याणामगम्यस्थानम् । नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः । अपरं यथा यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि तथा तथाहमेतज्जानामि यद्द्राग्गच्छामि मा कश्चिन्ममाप्यनर्थो 5 भवेत् । यतः ।

याद‍ृशी वदनच्छाया द‍ृश्यते तव वानर ।
विकालेन गृहीतोसि यः परैति स जीवति ॥ ८८ ॥

चक्रधर आह । कथमेतत् । सोब्रवीत् ।

---

## कथा ११.

10 कस्मिंश्चिन्नगरे भद्रसेनो नाम राजा प्रतिवसति स्म । तस्य सर्वलक्षणसंपन्ना रत्नवती नाम कन्यास्ति । तां कश्चिद्राक्षसो जिहीर्षति । रात्रावागत्योपभुङ्क्ते । परं कृतरक्षोपधानां हर्तुं न शक्नोति । सापि तत्समये रक्षःसांनिध्यजामवस्थामनुभवति कम्पादिभिः । एवमतिक्रामति काले कदाचित्स राक्षसो मध्यनिशायां गृहकोणे स्थितः । सापि राज15 कन्या स्वसखीमुवाच । सखि पश्यैष विकालसमये नित्यमेव मां कदर्थयति । अस्ति तत्तस्य दुरात्मनः प्रतिषेधोपायः कश्चित् । तच्छ्रुत्वा राक्षसोपि व्यचिन्तयत् । नूनं यथाहं तथान्योपि कश्चिद्विकालनामास्या हरणाय नित्यमेवागच्छति । परं सोप्येनां हर्तुं न शक्नोति । तत्तावदश्वरूपं कृत्वाश्वमध्यगतो निरीक्षयामि किंरूपः स किंप्रभाव इति । 20 एवं राक्षसोश्वरूपं कृत्वाश्वानां मध्ये तिष्ठति । तथानुष्ठिते निशीथसमये राजगृहे कश्चिदश्वचौरः प्रविष्टः । स च सर्वानश्वानवलोक्य तं राक्षसमश्वतमं विज्ञायाधिरूढः । अत्रान्तरे राक्षसश्चिन्तयामास । नूनमेष विकालनामा मां चौरं मत्वा कोपान्निहन्तुमागतः । तत्किं करोमि । एवं चिन्तयन्सोपि तेन खलीनां मुखे निधाय कशाघातेन 25 ताडितः । अथासौ भयत्रस्तमनाः प्रधावितुमारब्धः । चौरोपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरं कर्तुमारब्धवान् । स तु केवलं वेगाद्वेगतरं

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गच्छति । अथ तं तथागणितखलीनाकर्षणं मत्वा चौरश्चिन्तयामास । अहो नैवंविधा वाजिनो भवन्ति नैवमगणितखलीनाः । तन्नूनमनेनाश्वरूपेण राक्षसेन भवितव्यम् । तद्यदि कंचित्पांशुलं भूमिदेशमवलोकयामि तदात्मानं तत्र पातयामि । नान्यथा मे जीवितव्यमस्ति । एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोश्वो वटवृक्षस्य तले निष्क्रान्तः । 5 चौरोपि वटप्ररोहमासाद्य तत्रैव विलग्नः । ततो द्वावपि तौ पृथग्भूतौ परमानन्दभाजौ जीवितविषये लब्धप्रत्याशौ संपन्नौ । अथ तत्र वटे कश्चिद्राक्षससुहृद्वानरः स्थित आसीत् । तेन राक्षसं त्रस्तमालोक्य व्याहृतम् । भो मित्र किमेवं पलाय्यतेलीकभयेन । त्वद्भक्ष्योयं मानुषः। भक्ष्यताम् । सोपि वानरवचो निशम्य स्वरूपमाधाय शङ्कितमनाः 10 स्खलितगतिर्निवृत्तः । चौरोपि तं वानराहूतं ज्ञात्वा कोपात्तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान् । वानरोपि तं राक्षसाभ्यधिकं मन्यमनो भयान्न किंचिदुक्तवान्केवलं व्यथार्त्तो निमीलितनयनस्तिष्ठति यथा भवानिति । राक्षसोपि तं तथाभूतमवलोक्य श्लोकमेनमपठत् ।

> यादृशी वदनच्छाया दृश्यते तव वानर । 15
> विकालेन गृहीतोसि यः परैति स जीवति ॥ ८९ ॥

प्रनष्टश्च ।

तत्प्रेषय मां येन गृहं गच्छामि । त्वं पुनरनुभुङ्क्ष्वात्र स्थित एव लोभवृक्षफलम् । चक्रधरः प्राह । भो अकारणमेतत् । दैववशात्संपद्यते नृणां शुभाशुभम् । उक्तं च । 20

> दुर्गं त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्च वित्तम् ।
> शास्त्रं च यस्योशनसा प्रणीतं स रावणो दैववशाद्विपन्नः ॥ ९० ॥

तथा च ।

> अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका ।
> त्रयोप्यन्यायतः सिद्धाः संमुखे कर्मणि स्थिते ॥ ९१ ॥ 25

सुवर्णसिद्धिराह कथमेतत् । सोब्रवीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## कथा १२.

अस्त्यत्र धरातल उत्तरपथे मधुपुरं नाम नगरम् । तत्र मधुसेनो नाम राजा बभूव । तस्य कदाचिद्विषयसुखमनुभवतस्त्रिस्तनी कन्या बभूव । अथ तां त्रिस्तनीं जातां श्रुत्वा स राजा कञ्चुकिनः प्रोवाच । 5 यद्भोस्त्यज्यतामियं त्रिस्तनी गत्वा दूरेरण्ये यथा कश्चिन्न जानाति । तच्छ्रुत्वा कञ्चुकिनः प्रोचुः । महाराज ज्ञायते यदनिष्टकारिणी त्रिस्तनी कन्या भवति । तथापि ब्राह्मणा आहूय प्रष्टव्या येन लोकद्वयं न विरुध्यते । यतः ।

> यः सततं परिपृच्छति शृणोति संधारयत्यनिशम् ।
> 10 तस्य दिवाकरकिरणैर्नलिनीव विवर्धते बुद्धिः ॥ ९२ ॥

तथा च ।

> पृच्छकेन सदा भाव्यं पुरुषेण विजानता ।
> राक्षसेन्द्रगृहीतोपि प्रश्नान्मुक्तो द्विजः पुरा ॥ ९३ ॥

राजाह । कथमेतत् । ते प्रोचुः ।

---

15

## कथा १३.

देव कस्मिंश्चिद्वनोद्देशे चण्डकर्मा नाम राक्षसः प्रतिवसति स्म । एकदा तेन भ्रमताटव्यां कश्चिद्ब्राह्मणः समासादितः । ततस्तस्य स्कन्धमारुह्य प्रोवाच । भो अग्रे सरो गम्यताम् । ब्राह्मणोपि भयत्रस्तमनास्तमादाय प्रस्थितः । अथ तस्य कमलोदरकोमलौ पादौ दृष्ट्वा 20 ब्राह्मणो राक्षसमपृच्छत् । भोः किमेवंविधौ ते पादावतिकोमलौ । राक्षस आह । भो व्रतमस्ति । नाहमार्द्रपादो भूमिं स्पृशामि । ततस्तच्छ्रुत्वात्मनो मोक्षोपायं चिन्तयंस्तत्सरः प्राप्तः । ततो राक्षसेनाभिहितम् । भो यावदहं स्नानं कृत्वा देवतार्चनविधिं विधायागच्छामि तावत्त्वयातः स्थानान्नान्यत्र गन्तव्यम् । तथानुष्ठिते द्विजश्चिन्तया- 25 मास । नूनं देवतार्चनविधेरूर्ध्वं मामेष भक्षयिष्यति । तदुत्तरं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गच्छामि येनैष आर्द्रपादो न मम पृष्ठमेष्यति । तथानुष्ठिते राक्षसो व्रतभङ्गभयात्तस्य पृष्ठं न गतः । अतोहं ब्रवीमि ।

पृच्छकेन सदा भाव्यं पुरुषेण विजानता ।
राक्षसेन्द्रगृहीतोपि प्रश्नान्मुक्तो द्विजः पुरा ॥ ९४ ॥

अथ तेभ्यस्तच्छ्रुत्वा राजा द्विजानाहूय प्रोवाच । भो ब्राह्मणाः 5 त्रिस्तनी मे कन्या संपन्ना । तत्किं तस्याः प्रतिविधानमस्ति किं वा न । ते प्रोचुः । देव श्रूयताम् ।

हीनाङ्गी वाधिकाङ्गी वा या भवेत्कन्यका नृणाम् ।
भर्तुः स्यात्सा विनाशाय स्वशीलनिधनाय च ॥ ९५ ॥
या पुनस्त्रिस्तनोपेता याति लोचनगोचरम् । 10
पितरं नाशयत्येव सा द्रुतं नात्र संशयः ॥ ९६ ॥

तस्मादस्या दर्शनं परिहरतु देवः । तथा यदि कश्चिदुद्वाहयति तदेनां तस्मै दत्त्वा देशत्यागेन नियोजयितव्य इति । एवं कृते लोकद्वयाविरुद्धता भवति । अथ तेषां तद्वचनमाकर्ण्य स राजा पटहशब्देन सर्वत्र घोषणामाज्ञापयामास । अहो त्रिस्तनीं राजकन्यां यः 15 कश्चिदुद्वाहयति स सुवर्णलक्षमाप्नोति देशत्यागं च । एवं तस्यामाघोषणायां क्रियमाणायां महान्कालो व्यतीतः । न कश्चित्तां प्रतिगृह्णाति । सापि यौवनोन्मुखी संजाता सुगुप्तस्थानस्थिता यत्नेन रक्ष्यमाणा तिष्ठति । अथ तत्रैव नगरे कश्चिदन्धस्तिष्ठति । तस्य च मन्थरकनामा कुब्जोग्रेसरो यष्टिग्राही । ताभ्यां तं पटहशब्दमाकर्ण्य मिथो 20 मन्त्रितम् । स्पृशयतेयं पटहो यदि कथमपि दैवात्कन्या लभ्यते तथा सुवर्णप्राप्तिश्च भवति । सुखेन सुवर्णप्राप्त्या कालो व्रजति । अथ यदि तस्या दोषतो मृत्युर्भवति दारिद्र्योपात्तस्यास्य क्लेशस्य पर्यन्तो भवति । उक्तं च ।

लज्जा स्नेहः स्वरविशदता बुद्धयः सौभनस्यं 25
प्राणोनङ्गः पठनसमता दुःखहानिर्विलासाः
धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता
सर्वे? पूर्णे जठरपिठरे प्राणिनां संभवन्ति ॥ ९७ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमुक्तान्धेन गत्वा स पटहः स्पृष्टः । भो अहं तां कन्यामुद्वाहयामि यदि राजा मे प्रयच्छति । ततस्तै राजपुरुषैर्गत्वा राज्ञे निवेदितम् । देव अन्धकेन केनचित्पटहः स्पृष्टः । तदत्र विषये देवः प्रमाणं किं क्रियतामिति । राजा प्राह ।

5 अन्धो वा बधिरो वापि कुष्ठी वाप्यन्त्यजोपि वा ।
प्रतिगृह्णातु तां कन्यां सलक्षां स्याद्विदेशगः ॥ ९८ ॥

अथ राजादेशात्तै रक्षापुरुषैस्तं नदीतीरे नीत्वा सुवर्णलक्षेण समं विवाहविधिना त्रिस्तनीं तस्मै दत्त्वा जलयाने निधाय कैवर्ताः प्रोक्ताः । भो देशान्तरं नीत्वा कस्मिंश्चिदधिष्ठानेन्धः सपत्नीकः कुब्ज-10 केन सह मोचनीयः । तथानुष्ठिते विदेशमासाद्य कस्मिंश्चिदधिष्ठाने कैवर्तदर्शिते ते त्रयोपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्ति स्म । केवलमन्धः पर्यङ्के सुप्तस्तिष्ठति । गृहव्यापारं मन्थरकः करोति । एवं गच्छता कालेन त्रिस्तन्याः कुब्जकेन सह विकृतिः समपद्यत । अथवा साध्विदमुच्यते ।

15 यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः ।
सुस्वादः सागरः स्त्रीणां तत्सतीत्वं प्रजायते ॥ ९९ ॥

अथान्येद्युस्त्रिस्तन्या मन्थरकोभिहितः । भोः सुभग यद्येषोन्धः कथंचिद्व्यापाद्यते तदावयोः सुखेन कालो याति । तदान्विष्यतां कुत्रचिद्विषं येनास्मै तत्प्रदाय सुखिनी भवामि । अन्यदा कुब्जकेन परि-20 भ्रमता मृतः कृष्णसर्पः प्राप्तः । तं गृहीत्वा प्रहृष्टमना गृहमभ्येत्य तामाह । सुभगे लब्धोयं कृष्णसर्पः । तदेनं खण्डशः कृत्वा प्रभूतशुण्ठ्यादिभिः संस्कार्यामुष्मै विकलनेत्राय मत्स्यामिषं भणित्वा प्रयच्छ येन द्राग्विनश्यति यतोस्य मत्स्यस्यामिषं सदा प्रियम् । एवमुक्त्वा मन्थरको बाह्ये गतः । सापि प्रदीप्तवह्नौ कृष्णसर्पं खण्डशः कृत्वा 25 तक्रमादाय गृहव्यापाराकुला तं विकलाक्षं सप्रश्रयमुवाच । आर्यपुत्र तवाभीष्टं मत्स्यमांसं समानीतं यतस्त्वं सदैव तत्पृच्छसि । ते च मत्स्या वह्नौ पाचनाय तिष्ठन्ति । तद्यावदहं गृहकृत्यं करोमि तावत्त्वं दर्वीमादाय क्षणमेकं तान्प्रचालय । सोपि तदाकर्ण्य हृष्टमनाः सृक्किणी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिलिहन्द्रुतमुत्थाय दर्वीमादाय प्रमथितुमारब्धः। अथ तस्य मत्स्यान्मथतो विषगर्भबाष्पेण संस्पृष्टं नीलपटलं चक्षुर्भ्यामगलत्। असावप्यन्धो बहुगुणं मन्यमानो विशेषान्नेत्राभ्यां बाष्पग्रहणमकरोत्। ततो लब्धदृष्टिर्जातो यावत्पश्यति तावत्तक्रमध्ये कृष्णसर्पखण्डानि केवलान्येवावलोकयति। ततो व्यचिन्तयत्। अहो किमेतत्। मम मत्स्यामिषं 5 कथितमासीदनया। एतानि तु कृष्णसर्पखण्डानि। तत्तावद्विजानामि सम्यक् त्रिस्तन्याश्चेष्टितं किं मम वधोपायक्रमः कुब्जस्य वोताहो अन्यस्य वा कस्यचित्। एवं विचिन्त्य स्वाकारं गूहन्नन्धवत्कर्म करोति यथा पुरा। अत्रान्तरे कुब्जः समागत्य निःशङ्कतयालिङ्गनचुम्बनादिभिस्त्रिस्तनीं सेवितुमुपचक्रमे। सोऽप्यन्धस्तमवलोकयन्नपि यावन्न किंचिच्छ- 10 स्त्रं पश्यति तावत्कोपव्याकुलमनाः पूर्ववच्छयनं गत्वा कुब्जं चरणाभ्यां संगृह्य सामर्थ्यात्स्वमस्तकोपरि भ्रामयित्वा त्रिस्तनीं हृदये व्यताडयत्। अथ कुब्जप्रहारेण तस्यास्तृतीयः स्तन उरसि प्रविष्टः। तथा बलान्मस्तकोपरि भ्रामणेन कुब्जः प्राञ्जलतां गतः। अतोऽहं ब्रवीमि।

अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका। 15
त्रयोऽप्यन्यायतः सिद्धाः संमुखे कर्मणि स्थिते॥ १००॥

सुवर्णसिद्धिराह। भोः सत्यमेतत्। दैवानुकूलतया सर्वं कल्याणं संपद्यते। तथापि पुरुषेण सतां वचनं कार्यम्। न पुनरेवमेव यो वर्तते स त्वमिव विनश्यति। तथा च।

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः। 20
असंहता विनश्यन्ति भारण्डा इव पक्षिणः॥ १०१॥

चक्रधर आह। कथमेतत्। सोऽब्रवीत्।

## कथा १४.

कस्मिंश्चित्सरोवरे भारण्डनामा पक्ष्येकोदरः पृथग्ग्रीवः प्रतिवसति स्म। तेन च समुद्रतीरे परिभ्रमता किंचित्फलममृतकल्पं तरंगाक्षिप्तं 25 संप्राप्तम्। सोऽपि भक्षयन्निदमाह। अहो बहूनि मयामृतप्रायाणि समु-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्रकल्लोलाहृतानि फलानि भक्षितानि । परमपूर्वोऽस्यास्वादः । तत्किं पारिजातहरिचन्दनतरुसंभवं किं वा किंचिदमृतमयफलमव्यक्तेनापि विधिनापतितम् । एवं तस्य ब्रुवतो द्वितीयमुखेनाभिहितम् । भो यद्येवं तन्ममापि स्तोकं प्रयच्छ येन जिह्वासौख्यमनुभवामि । ततो विहस्य
5 प्रथमवक्त्रेणाभिहितम् । आवयोस्तावदेकमुदरमेका तृप्तिश्च भवति । ततः किं पृथग्भक्षितेन । वरमनेन शेषेण प्रिया तोष्यते । एवमभिधाय तेन शेषं भारण्ड्याः प्रदत्तम् । सापि तदास्वाद्य प्रहृष्टतमालिङ्गनचुम्बनसंभावनानेकचाटुपरा बभूव । द्वितीयं मुखं तद्दिनादेव प्रभृति सोद्वेगं सविषादं च तिष्ठति । अथान्येद्युर्द्वितीयमुखेन विषफलं प्राप्तम् ।
10 तद्दृष्ट्वापरमाह । भो निस्त्रिंश पुरुषाधम निरपेक्ष मया विषफलमासादितम् । तत्तवापमानाद्भक्षयामि । अपरेणाभिहितम् । मूर्ख मा मैवं कुरु । एवं कृते द्वयोरपि विनाशो भविष्यति । अथैवं वदता तेनापमानेन फलं भक्षितम् । किं बहुना । द्वावपि विनष्टौ । अतोऽहं ब्रवीमि ।

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः ।
15 असंहता विनश्यन्ति भारण्डा इव पक्षिणः ॥ १०२ ॥

चक्रधर आह । सत्यमेतत् । तद्गच्छ गृहम् । परमेकाकिना न गन्तव्यम् । उक्तं च ।

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात् ।
एको न गच्छेदध्वानं नैकश्चार्थान्प्रचिन्तयेत् ॥ १०३ ॥

20 अपि च ।

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम् ॥ १०४ ॥

सुवर्णसिद्धिराह । कथमेतत् । सोऽब्रवीत्

---

## कथा १५.

25 कस्मिंश्चिदधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म । स च प्रयोजनवशाद्ग्रामं प्रस्थितः स्वमात्राभिहितः । वत्स कथमेकाकी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

खेकडा

लौल्यं Greediness

भावना - Faith
सिद्धिः - Success. Fruit

अनुज्ञाप्य = Absolutive of the causal of ज्ञा with अनु.
= Having taken leave.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्रजसि । तदन्विष्यतां कश्चिद्द्वितीयः सहायः । स आह । अम्ब मा भैषीः । निरुपद्रवोयं मार्गः । कार्यवशादेकाकी गमिष्यामि । अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः सकाशात्कर्कटमादाय मात्राभिहितः । वत्स अवश्यं यदि गन्तव्यं तदेष कर्कटोपि सहायः । तदेनं गृहीत्वा गच्छ । सोपि मातुर्वचनादुभाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिकामध्ये 5 निधाय पात्रमध्ये संक्षिप्य शीघ्रं प्रस्थितः । अथ गच्छन्ग्रीष्मोष्मणा संतप्तः कंचिन्मार्गस्थं वृक्षमासाद्य तत्रैव प्रसुप्तः । अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः । सोपि कर्पूरसुगन्धसहजप्रियत्वात्तं परित्यज्य वस्त्रं विदार्याभ्यन्तरगतां कर्पूरपुटिकामतिलौल्यादभक्षयत् । सोपि कर्कटस्तत्रैव स्थितः सन्सर्पप्राणानपाहरत् । ब्राह्मणोपि यावत्प्रबुद्धः 10 पश्यति तावत्समीपे कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितस्तिष्ठति । तं दृष्ट्वा व्यचिन्तयत् । कर्कटेनायं हत इति प्रसन्नो भूत्वाब्रवीत् । भोः सत्यमभिहितं मम मात्रा यत्पुरुषेण कोपि सहायः कार्यो नैकाकिना गन्तव्यम् । ततो मया श्रद्धापूरितचेतसा तद्वचनमनुष्ठितम् । तेनाहं कर्कटेन सर्पव्यापादनाद्रक्षितः । अथवा साध्विदमुच्यते । 15

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ १०५ ॥

एवमुक्त्वासौ ब्राह्मणो यथाभिप्रेतं गतः । अतोहं ब्रवीमि ।

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम् ॥ १०६ ॥ 20

ततश्च सुवर्णसिद्धिरपि तं चक्रधरं ब्राह्मणो यथानुज्ञाप्य स्वगृहं गतः ॥

समाप्तं चेदमपरीक्षितकारकं नाम पञ्चमं तन्त्रम् ॥

॥ एवं पञ्चतन्त्रकं नाम नीतिशास्त्रं समाप्तम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# NOTES TO PANCHATANTRA IV. AND V.

P. 1, l. 1.—लब्धप्रणाशम् compare अभिज्ञानशकुन्तलं नाम नाटकम् ॥ and the titles of the other Tantras.

P. 1, l. 3.—बुद्धि 'presence of mind.'

P. 1, l. 13.—The Vaiśvadeva is the sacrifice which ought to be offered before the morning and evening meals with the freshly prepared food. It includes oblations to various deities and ends with one offered to the viśve devâḥ, all the gods; see Manu III., 84, sqq., and 121. स्वर्गसंक्रम: a bahuvrihi-compound.

P. 1, l. 14.—चरण 'a Vedic school,' such as that of the Âpastambas. विद्या the knowledge (of the Vedas and Vedâṅgas), 'sacred learning.' The Brâhmaṇas, Sûtras, and Smṛitis use this word almost exclusively in this restricted sense.

P. 1, l. 20.—विविधशास्त्रगोष्ठी 'conversations regarding various sciences.'

P. 2, l. 5.—एकस्थाने, 'firstly,' अन्यस्मिन्, 'secondly.' प्रसूते 'produces offspring,' *i.e.*, 'is the source of the ties of relationship.'

P. 2, l. 11.—हुतवहज्वालासमम्, (sighest sighs) 'burning hot, like flames of fire.'

P. 2, l. 12.—यत् 'because' must be taken also with each of the preceding sentences.

P. 2, l. 16.—Sense of śloka 7: 'Be kind again, because I show contrition, and really nobody loves thee so well as I.'

P. 2, l. 19.—Metre of śloka 8, Vasantatilakâ.

P. 2, l. 20.—कृत्रिमभावरम्या 'charming on account of her feigned affection.'

P. 2, l. 25.—प्रायोपवेशनं कृतं विद्धि 'know that I shall certainly kill myself by fasting.' The part. perf. pass. indicates the firm resolution, which is so firm that the act may be considered as good as done.

P. 3, l. 1.—वज्रलेप 'diamond-cement.' Regarding its preparation, see Tantra I., p. 66, śloka 11, note.

P. 3. l. 3.—प्रत्ययः, see Kielhorn Gr. § 537

P. 3, l. 15.—चतुष्क 'a square.' Probably the चौक or four-cornered figures are meant here, which are drawn in white

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

chalk, or formed of wheat or rice, round the seat or dining-place of honoured guests at festive occasions, see Molesworth's Marâṭhi Dict., s. v. चौक. This explanation, which I owe to Mr. Shankar P. Paṇḍit, seems better than that proposed in the Petersburg Dict., s. v., चतुष्क, viz., 'a hall resting on four pillars or a Maṇḍapa.' For it is, at least now, not customary to erect Maṇḍapas simply for the reception of guests. प्रगुणित 'splendid.'

P. 3, l. 18.—कौलिकाकार 'behaving like a weaver,' because the weaver constantly draws towards himself the batten and the threads of the weft.

P. 3, l. 23.—जलान्ते 'in the water.' Compare below समुद्रान्ते and similar compounds, passim, and Raghuvaṁśa II., 19 and 58.

P. 3, l. 25.—पुलिनप्रदेश 'a sandbank.'

P. 4, l. 14.—जल्पित 'promised, vowed.'

P. 4, l. 18.—विश्वसेत् irreg. 3rd pers. sing. potential, very common in epic poetry.

P. 4, l. 20.—चिन्तयान irreg. pres. part. Âtm., see Kielhorn Gr. § 499. This and similar forms are very common in the Mahâbhârata and Râmâyaṇa.

P. 4, l. 27.—गर्भमश्वतरी यथा construe यथाश्वतरी मृत्युमुपगृह्णाति गर्भरूपम्.

P. 5, l. 3.—ते. According to the common rules of grammar it ought to be तव, as ते and the other enclitic forms of the pronouns cannot stand in the beginning of a sentence. Kielhorn Gr. § 178.

P. 5, l. 7.—Metre of śloka 15: Upajâti.

P. 5, l. 10.—गङ्गदत्त: stands for गङ्गादत्तः. For in compounds which are used as proper names, the final आ or ई of a feminine affix which ends the first part of the comp., may be shortened. Siddhântakaumudi I., p. 468.

P. 5, l. 13.—अस्ति '(Thus) it is' must be taken as separate sentence, and as the immediate answers to the question कथमेतत्. Professor Benfey combines it with कस्मिंश्चित्, and takes it in the sense of 'whichsoever it may be.' For other examples of this use of अस्ति see p. 10, l. 1; p. 16, l. 6; p. 31, l. 5; p. 34, l. 17; p. 36, l. 20; p. 57, l. 18; and the Petersburg Dict., s. v., अस्. Compare also Tantra I., note to p. 72, l. 2.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

P. 5, l. 14.—दायादैः 'kinsmen.' दायमादत्त इति दायादः lit. 'heir' is used also to denote all the relations of a person who are otherwise called Sagotra-sapiṇḍas, *i.e.*, descendants, ascendants, and collaterals in the male lines within seven degrees, probably because, under the old law, these persons alone inherited. Compare also Yâjñavalkya II., 263, with the remarks of Vijnâneśvara on the passage.

P. 5, l. 17.—Metre of śloka 16, Âryâ.

P. 6, l. 2.—एष 'There (is) somebody (who).'

P. 6, l. 7.—Bṛihaspati is the reputed author of a work on law and of one on Nîti. The latter treated of 'Distrust,' अविश्वास.

P. 6, l. 9.—भक्षणार्थे 'in order to give me (to his enemy) to eat, *i.e.*, in order to poison his enemy by giving him my body to eat.' See below Tantra V., p. 66, l. 21, where the attempt of the 'princess with the three breasts,' to poison her husband with the meat of a black cobra is narrated.

P. 7, l. 23.—एकैकम् 'every day one;' compare below p. 7, l. 26, and p. 8, l. 9.

P. 7, l. 27.—यः must be understood.

P. 8, l. 3.—वाडवः scil. अग्निः. The fire banished by Aurva into the ocean dries up a space of 12 Krośas in circumference.

P. 8, l. 5.—Metre of śloka 26, Upajâti.

P. 8, l. 7.—दृश्यमानम् 'Just that which has been pointed out (to him by his strong friend as desired).'

P. 8, l. 10.—समुत्पन्ने अर्थे. Similar cases where the Sandhi-rules are not attended to occur frequently in epic poetry, in the Smṛitis, and in the verses of the Panchatantra. Compare, *e.g.*, below p. 14, l. 18, p. 21, l. 5, and Tantra II., śloka 60; Tantra, III., śloka 1, and passim.

P. 8, l. 17.—मत्वा for ज्ञात्वा occurs frequently in our redaction of the Panchatantra, as well as in epic poetry and still older works.

P. 8, l. 19.—पक्ष 'family, race.'

P. 8, l. 22.—कवलित lit. 'made mouthfuls of,' *i.e.*, 'eaten one by one.'

P. 8, l. 25.—मयावस्थितेन instr. absolute. In this construction the instr. originally expresses 'the reason' 'हेतु.'



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

P. 9, l. 6.—परिचितम् in the sense of an abstract noun.

P. 9, l. 9.—अन्तरे विधृ 'to pledge.'

P. 10, l. 5.—क्षाम 'parched.'

P. 10, l. 21.—दोष 'bad luck.'

P. 11, l. 5,—Construe कौतुकं (भाति) यत्तासां दृक्संगमं प्राप्य न द्रवाति 'one does not melt.'

P. 11, l. 10.—बलात् 'by force, *i.e.*, against thy will.'

P. 11, l. 18.—चर् 'to graze.' Some examples of this meaning of the root, which is the common one in Marâṭhî, occur already in the older Sanskrit writers.

P. 12, l. 3.—Metre of śloka 34, Śârdûlavikrîḍita.

P. 12, l. 5.—नग्नीकृता मुण्डिताः, these two words describe the Jaina and Bauddha ascetics—रक्तपटीकृताः '(have been) dressed in red rags.' Red clothes are the marks also of Smârta ascetics. कापालिकाः 'scull wearers.' This is the name of certain disreputable worshippers of Devî, see H. H. Wilson's Works vol. I., pp. 21 and 264. The verse sarcastically represents asceticism as a consequence of the anger of Cupid.

P. 12, l. 10.—किं=किंचित्—कथम् '(else) how.'

P. 12, l. 13.—अपि 'then.' It is frequently used in this sense in the Panchatantra.

P. 12, l. 14.—प्रतर्पितपितृगणः refers to the performance of the daily, to the daily libations, offered to the manes, see Baudhâyana Dharmasûtra II., 10.

P. 13, l. 12.—तेन 'for that reason.'

P. 13, l. 14.—राजपुत्राः 'warriors (Râjputs).'

P. 13, l. 23.—चन्द्रार्धः instead of the more common अर्धचन्द्रः occurs also in epic poetry.—अर्धचन्द्रं दा 'to seize by the neck, (and turn out).'

P. 15, l. 2.—भग्न 'put to flight.'

P. 16, l. 10.—यथेच्छया 'an incorrect form for यथेच्छम्, probably caused by the analogy of स्वेच्छया.

P. 17, l. 8.—Metre of śloka 47, Àryâ.

P. 17, l. 21.—Metre of śloka 50, Śikhariṇi.

P. 17, l. 22.—Regarding the story of the birth of Vyâsa, the son of Satyavatî and Parâśara, and other stories alluded to in this verse, see Mahâbhârata I., 105, 6, sqq.

P. 17, l. 25.—कुलानामिति 'as regards (the statement of śloka

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

49 that the history) of noble families (ought not to be examined too closely)'........स्त्रीणामिति must be translated similarly.

P. 18, l. 5.—The connexion of p. 17, l. 3—16 seems to be this. The carpenter at first doubts whether it will be proper to try his wife. He quotes ślokas 49 and 50 against the undertaking. But śloka 51 reminds him of the wickedness of women in general, and the remembrance of the gossip which has come to his ears (l. 16) confirms him in his first resolution.

P. 18, l. 7.—ब्रह्माण्ड 'the egg of Brahman, *i.e.*, the whole world', see Manu I., 9, 12—13.

P. 18, l. 12.—Metre of śloka 53, Âryâ.

P. 18, l. 16.—कंचिद्विट्गृहम् double accusative of person and place depending upon गत्वा.

P. 19, l. 10.—Construe प्रतीकारः सन्नपि नास्ति यतस्त्वया स आयत्तः [त्वं च तमुपयोक्तुं नाङ्गीकरिष्यसीति शेषः]

P. 19, l. 13.—अपमृत्यु 'untimely death.'

P. 19, l. 15.—निश्चय 'firm belief.'

P. 19, l. 24.—छन्देन lit. 'by the will, *i.e.*, according to, to.'

P. 20, l. 4.—पौरुष 'disposition.'

P. 20, l. 8.—स्वयोनिम् a bahuvrihi-compound.

P. 20, l. 24.—अन्न 'cooked food,' especially rice.

P. 21, l. 2.—प्रदुष्यति, *i.c.*, दोषं जनयति.

P. 21, l. 8.—प्रशस्यते 'is declared to be best,' *i.e.*, in the Śâstras.

P. 21, l. 10.—सुहृन्मित्र 'relations and friends.'

P. 21, l. 11.—विशिष्यते 'is preferable' (for saints, etc.)

P. 21, l. 16.—After मुञ्च मुञ्च [इत्युक्ते सति प्रथमेन] must be understood, and after सर्वार्थसाधनम् [इति तृतीयश्चिन्तयति स्म].

P. 21, l. 21.—पोतिका 'a cloth.'

P. 22, l. 14.—संचर् 'to infect.'

P. 23, l. 8.—तैर्गुणैः । विवाहात्पर्वं रजःस्रवणजनितैरधर्माख्यैरिति, *i.e.*, 'through the demerit produced thereby.'

P. 24, l. 13.—उत्तमः 'very much superior.' Below, this and other superlatives must frequently be translated in the same manner.

P. 24, l. 14.—श्रेष्ठतरः see below, p. 47, l. 4, note.

P. 25, l. 16.—Metre of śloka 77, Vasantatilakâ.

P. 25, l. 21.—Metre of śloka 78, Śârdûlavikrîḍita.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

P. 25, l. 24.—The accusative पुरुषम् is governed by हा, see Siddhântakaumudî I., p. 262.

P. 26, l. 19.—अतिरिच्यते 'surpasses, viz., in desolateness, *i.e.*, 'is more desolate.'

P. 27, l. 9.—विषमया: for विषमय्य: The latter would be the correct form according to Pâṇini (Siddhântakaumudî I., p. 215), as the affix मय is technically टित्, मयट्. The fem. in अ is, however, not uncommon in the later Sanskrit works, see the Petersburg Dict., s. v., मय.

P. 27, l. 18.—बाल: 'a fool.'—विकल्प् 'imagine (to find).'

P. 29, l. 2.—निरीक्षसि against the rules of Pâṇini. The use of the root ईक्ष् in the Parasmaipada is, however, common also in epic poetry.

P. 29, l. 14.—भेद 'creating discord' and दान 'bribery' belong to the means of success recommended by the Hindu nîti, see below śloka 109 and also Tantra III., the speeches of the ministers of Arimardana.

P. 30, l. 3.—कदाचित् = कस्मिंश्चित्.

P. 31, l. 13.—शुचीभूय before making a solemn gift, the giver touches water or bathes, see Nîlakaṇṭha's Dânamayûkha Sect. III., Dâtṛikṛityâni, where a passage from the Vârâha P. on this point is quoted. तिसृभिर्वाचाभि: "pronouncing three words, *i.e.*, repeating, the words 'I give' three times," as is required on all solemn occasions according to the maxim, त्रिषत्या हि देवा:, Taittirîya Âraṇyaka II., 18. 6.

P. 32, l. 21.—वचनसहाय: 'a person to talk to.'

P. 32, l. 9.—राजपुरुषपदैरेव 'following closely the king's servants.'

P. 32, l. 11.—दायाद, see above note to p. 5, l. 14.

P. 32, l. 15.—निवेदित: 'denounced.'

P. 32, l. 20.—विवाचिकम्, see above p. 31, l. 13.

P. 33, l. 16.—द्रम्मा: ('a great deal of) money.' The word द्रम्म is a corruption of the Greek Drakhmé; a dramma is equal in value to four annas or six-pence. 20 varâṭakas (cowries) = 1 kâkiṇî; 4 kakiṇis = 1 paṇa; 16 paṇas = 1 dramma; 16 drammas = 1 nishka.

P. 33, l. 20.—निवेद्य......आदिष्टम् 'assigned and permitted.'

P. 34, l. 8.—उल्ललयित्वा 'jumping up;' an ungrammatical

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

form, see Kielhorn Gr. § 513. Similar interchanges of the affixes of the absolutive are not uncommon in the Vedas and epic poetry, *e.g.*, अभिवादयित्वा, निवेदयित्वा, see Benfey, vollstaendige grammatik, § 915, Bem. 2.

P. 34, l. 12.—साप्तपद '(to be) gained by seven steps.' The expression is explained by the 'seven steps' which the bride has to make at the marriage ceremony, and through which the marriage becomes binding.

P. 34, l. 8.—Metre of śloka 110, Aryâ. शिखिन् = अग्नि. भुक्तमुक्त, a karmadhâraya compound.

P. 34, l. 17.—Śloka 112 has a double sense. It applies not only to the pearl, but also to the man who seeks salvation (मौक्तिक). If the verse is taken in the latter sense, अत्यच्छ means सात्त्विक, अन्तर्भिन्न refers to the non-recognition of the unity of the individual soul and of Brahman, and निबन्धन means as much as संसारसंबन्ध.

P. 36, l. 17.—दिशोभाजस्. दिशस् fem., a rare form for the usual दिश् or दिशा.

P. 36, l. 20.—संपन्नम् = संपत्तिः.

P. 36, l. 23.—शिथिलाः 'careless.'

P. 37, l. 2.—सरमाया अपत्यं सारमेयः Saramâ is in Vedic mythology the bitch of the gods that assisted in the recovery of the cows of the Angiras from the Paṇis.

P. 38, l. 7.—पाटलिपुत्र is the old name of Patna, once the capital of Magadha or Bihâr. If *here* the same town is meant, the author must have been a very bad geographer, as Magadha does not belong to the Dekhan. Other redactions of the Panchatantra name instead of Pâṭaliputra, Mahilâropya, which was a southern town, see Tantra II., note to p. 1. l. 6.

P. 38, l. 11.—Metre of ślokas 2—10, Âryâ.

P. 38, l. 21.—न विभाव्यन्ते......पुरोपि निवसन्तः '(the existence of) small......is not recognised, though they dwell before (the eyes of their richer neighbours).'

P. 38, l. 25.—पूर्वसुकृतं पूर्वजन्मनि सुकृतमिति. विकलम् lit. 'defective, *i.e.*, inefficient, useless.' A new sentence begins with विद्यावन्तः.

P. 39, l. 1.—Construe पतिं पयसां गर्जन्तमपि—लोको नाह लघुरयमिति.

P. 39, l. 5.—पद्मनिधि 'a treasure having the value of a Padma,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

*i.e.*, 100,000,000 pieces of money. क्षपणक 'A Buddhist monk. Etymology [शेषान्] क्षपयतीति क्षपणः The affix क shows that the adjective has become an appellative.

P. 39, l. 6.—पूर्वपुरुषोपार्जितः "collected by thy ancestors (and concealed by them)."

P. 39, l. 20.—नग्नक 'an ascetic,' here, of course, a Bauddha.

P. 39, l. 24.—विहार 'a monastery.' जिनेन्द्रस्य "around (the statue of) the lord of the Jinas, *i.e.*, of Buddha." The Jinas are the Buddhas, 'who have triumphed over the enemy' (see Burnouf, Introduction à l'Hist. du Bouddhisme, p. 204), and the appellation 'lord of the Jinas' is frequently given to Śâkyamuni in Buddhist works. Statues of the various Buddhas are the usual objects of worship amongst the Buddhists and the chapel of the Vihâra, to which the barber went, necessarily possessed one. Regarding the various Buddhas enumerated by Buddhist writers, see Hodgson's Illustr. of the Rel. of the Buddhists, p. 46, seqq.

P. 39, l. 25.—वक्त्रद्वार 'the mouth.'

P. 39, l. 26.—जयन्ति, = जयन्तु Compare the phrase जयति जयति देवः which so frequently occurs in the Sanskrit dramas. The pres. indic. is used for the imper. in wishes made by inferiors for the welfare of superiors, in order to be more complimentary. Compare the Latin exhortations, 'fac, ut fecisti,' etc. केवलज्ञान denotes here, as commonly in philosophical language, the highest knowledge which leads to salvation (ग्रन्थभिद्).

P. 39, l. 26.—येषाम्—ऊषरायितम् "whose souls, from their birth, have become like a salt-desert, *i.e.*, unfit for the production of desires." Regarding ऊषरायितम् compare अनलायितम् S. Petersburg Dict., s. v.

P. 40, l. 8.—Metre of śloka 14, Śârdûlavikrîḍita—मार, lit. 'the slayer,' is with the Bauddhas a name of the Evil one, of the devil (see the S. Petersburg Dict., s. v.) His creatures, the मारवध्वः, address the Jina, who sits lost in meditation, and try in vain to seduce him. By his resistance to their wiles he proves his greatness.—नो=न. The verse forms the first part of the Nândî of the Nâgânanda Nâṭaka. The reading बुद्धो found there is preferable to बोद्धो (MSS.) or my former correction बौद्धो.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

P. 40, l. 10.—लब्धधर्मवृद्ध्याशीर्वाद: The salutation of a Bauddha ascetic is धर्मो वर्धताम्.

P. 40, l. 14.—तत्कालपरिचर्यया 'in search of the instantaneous hospitality (of our pupils).'

P. 42, l. 23.—निर्वाप: 'alms.'

P. 43, l. 5.—Metre of śloka 23, Vaṁśastha.

P. 43, l. 12.—साधुसुवंशजा karmadhâraya compound. नो = न is to be taken with भजते and यान्ति in the sense of अपगच्छन्ति न्यायारोपितविक्रमाणि 'from whom powerful assistance might justly be expected.' Metre of śloka 24, Śârdûlavikriḍita.

P. 43, l. 14.—Metre of śloka 25, Indravajrâ.

P. 43, l. 18.—Metre of śloka 26, Vasantatilakâ.

P. 43, l. 21.—वाह्य: 'a corpse.'

P. 43, l. 24.—Metre of śloka 27, Vasantatilakâ.

P. 44, l. 1.—महाकाल, the name of a famous Liṅga, one of the twelve Jyotirliṅgas, enumerated in the Purâṇas, and of its temple near Ujjain. It is frequently mentioned in the Sanskrit story-books, such as the Kathâsaritsâgara and the Daśakumâracharita. According to the Arabic writers it was consecrated about 930 A.D. and destroyed by Allumshah in 1231, see H. H. Wilson's Works I., p. 223.

P. 44, l. 5.—सिद्धियात्रिका: 'wandering about in order to learn magic arts.'

P. 44, l. 7.—Metre of ślokas 28, 29, 30, Âryâ.

P. 44, l. 8.—अलम्, 'sufficiently,' qualifies अवसरतुलिताभि:.

P. 44, l. 13.—अदृष्ट 'the invisible one' is the quality of the soul produced by meritorious or sinful acts (धर्म and अधर्म). This quality, *i.e.*, the merit or demerit, acquired during the preceding existence determines man's good or evil fortune in the following life.

P. 44, l. 14.—Metre of śloka 31, Âryâ. Construe गुरुलोकात् with भयम्; गुरुलोक: 'powerful men.' After प्राणान्, तृणमिव तुलयन्ति must be repeated.

P. 44, l. 16.—Metre of śloka 32, Âryâ. मधुभित् 'The destroyer of the (demon) Madhu, *i.e.*, Vishṇu.' मथनायस्तै: refers to the churning of the ocean, at which occasion Lakshmî was born and chose Vishṇu for her husband.

P. 44, l. 18.—Metre of śloka 33, Âryâ. The verse gives a

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

joking explanation for the fickleness of Fortune (Lakshmî). जलगतः refers to the sleep of Vishṇu in the ocean, where he is represented as reposing on the serpent Śesha.

P. 44, l. 20.—पर 'an enemy.' तुला has a double sense. It means the sign of Libra, which the sun enters in autumn at the end of the monsoon, and the phrase तुलामधिरुह् has also the meaning 'to become equal to (by strenuous exertion).'

P. 44, l. 22.—शाकिनी 'a female demon.'—महामांस human flesh or that of cows, horses, elephants, bears, buffaloes, camels, and snakes, as offered by the Śâktas to Devi.—साधकवर्ति 'a magic wick.'

P. 45, l. 1.—बहूपाय 'a very powerful.'

P. 45, l. 18.—उत्तमम्, see above note to p. 24, l. 13.

P. 46, l. 4.—वीणावत्स, see H. H. Wilson's Works IV., 60.

P. 46, l. 8.—धनद 'Kubera.'

P. 47, l. 4.—ज्येष्ठतर 'the eldest.' The irregular addition of तर to a superlative base finds its parallel in the श्रेष्ठतर, above p. 24, l. 14.

P. 47, l. 10.—केवला 'belonging to one man only.'

P. 48, l. 9.—कन्यकुब्ज 'Kanoj.' Regarding the form compare note to p. 5, l. 10.

P. 48, l. 11.—उत्कलापयित्वा 'having asked (our teacher) for permission to go.' It is an irregular form of the causal of the root कल with उद्, formed in the manner of the Prakrit causals. Other analogous forms as मुञ्चापयति, मोचापयति, जीवापयति occur in the Panchatantra and other story-books. (Benfey, Panchatantra II., 520). Regarding the irregular use of the affix त्वा compare note to p. 34, l. 18.

P. 48, l. 17.—The verse is from the Mahâbhârata III. 313. 17. and runs thus: तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥

P. 48, l. 18.—मेलापक 'company,' a Prákritic form.

P. 48, l. 26.—The whole śloka runs thus:—क्षणं चित्तं क्षणं वित्तं क्षणं जीवति मानवः । यमस्य करुणा नास्ति धर्मस्य त्वरिता गतिः ॥

P. 49, l. 12.—सूत्रिका 'maccaroni,' now called in Marâṭhî, शेंवई. They are made of wheaten flour.

P. 49, l. 14.—मण्डक, now called मांडा in Marâṭhî, is a kind of large, very thin cake, made of wheaten flour and sugar.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

P. 49, l. 16.—वटिका, now called अंबोळी in Marâṭhî, is a kind of cake, made of rice and Uḍid (Mâsha). It is pierced with numerous little holes.

P. 49, l. 26.—Metre of śloka 44, Vaṁsastha.

P. 50, l. 25.—Vishṇugupta Châṇakya assisted Chandragupta, the contemporary of Alexander the Great, to gain the throne by destroying the dynasty of the Nandas. See H. H. Wilson, Hindu Theatre, II., p. 127—150, S. G. Turnour, Mahâvanso, Introduction, p. xxxix., seqq.

P. 51, l. 25.—लक्षण 'a medal' (for proficiency in music).

P. 52, l. 13.—काशिन् 'one who has the cough.'

P. 52, l. 25.—मूर्छना 'scale.'—ग्राम 'octave.'—तान 'a quaver.' स्थानत्रयं यतीनाम् 'there are the positions of the pauses,' *i.e.*, two in the middle and at the end of each common verse, and the third in the alliterative verse before the alliteration. श्रुतेः परम् 'depending upon the intervals called śruti.' Each note consists of a certain number of śrutis, *i.e.*, Sha = 4, Ri = 3, Ga = 2, Ma = 4, Pa = 4, Dha = 3, Ni = 2. भरत is the reputed author of the second work on music, which still exists, and a copy of which is preserved in the Government Collection of 1869 No. 111, in the Deccan College. The total of 185 aṅgas will be obtained by entering the number of the svaras at 21, 7 for each grâma or octave.

P. 54, l. 5.—व्यन्तर 'a sprite.'

P. 54, l. 27.—भार्गव, *i.e.*, Uśanas, who is one of the reputed writers on Nîti.

P. 55, l. 13.—यानेत्यादि six lines of conduct, to be observed in high politics. Full details regarding them are found in the beginning of the third Tantra.

P. 55, l. 15.—Metre of śloka 67, Upendravajrâ.

P. 55, l. 18.—Metre of śloka 68, Śârdûlavikrîḍita. The Vṛishṇis, a sub-division of the Yâd avas, were destroyed by internal dissensions in the times of Kṛishṇa, see Harivaṁsa, adhyâya 40. अर्जुन, the son of Kṛitavîrya, was slain by Paraśu-râma.

P. 56, l. 12.—आशापिशाचिका 'a cruel and delusive hope.'

P. 56, l. 19.—भुक्तावंरितैः 'remaining after the dinner.'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

P. 56, l. 19.—नागदन्त 'a peg fixed in the wall.'

P. 56, l. 26.—चतुःशालं गृहम् 'a house, which has a court in the middle and rooms on all four sides.' This is the plan on which the better kind of Hindu houses are usually built.

P. 57, l. 20.—Uśanas, Bṛihaspati, and Châṇakya are said to have been the three most famous writers on Nîti.

P. 58, l. 5.—Sâlihotra is the name of an ancient writer on veterinary surgery, see also below p. 59, l. 13. Fragments of his writings are preserved in the Sârasamuchchhaya of Kalhaṇa, a modern work on the same subject.

P. 59, l. 21.—अनृणताकृत्येन 'in order to pay him out.'

P. 59, l. 22.—वंशजाम् 'committed against one's family.'

P. 61, l. 18.—वटे वानर इति वटवानरः ॥

P. 61, l. 24. —क्व यास्यसि 'what will become of thee (if etc.) ?' Śloka 87 contains the answer to this question.

P. 62. l. 22.—अश्वतम, 'the best horse.' The affixes तर and तम may be added to substantives also, compare *e.g.* वेगतरम् p. 62 l. 26. And the well-known Vedic name गोतम.

P. 63, l. 21.—Metre of śloka 90, Indravajrâ.—त्रिकूट, 'a mountain in Ceylon.'—Uśanas or Śukra was, according to Hindu mythology, the teacher of the Daityas, and composed for them his Nîtiśâstra.

P. 63, l, 25.—कर्मन् 'fate,' because the acts of man produce merit or demerit, *i.e.*, the apûrva guṇa, and this determines his good or bad fortune in his next life. संमुख 'favourable.'

P. 64, l. 2.—मधुपुर *i.e.*, Mathurâ, the modern Muttra.

P. 64, l. 9.—Metre of śloka 92, Upagîti.

P. 65, l. 25.—Metre of śloka 97, Mandâkrântâ.

P. 67, l. 2.—वाष्प 'steam.'

P. 67, l. 24.—The fabulous birds, called भारण्ड or भारुण्ड live according to the Hindu writers, in the country of the Uttarakurus, the Indian Hyperboreans.

P. 68, l. 11.—तवापमानात् 'in order to spite you.'

P. 68, l. 21.—द्वितीयः 'a companion.'

---

BOMBAY: PRINTED AT THE EDUCATION SOCIETY'S PRESS, BYCULLA.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# BOMBAY SANSKRIT SERIES.

*Edited formerly under the superintendence of* G. BÜHLER, Ph. D., *and* F. KIELHORN, Ph. D.; *continued under that of* P. PETERSON, M.A., *and* R. G. BHANDARKAR, M.A., *the former Superintendents being now referees.*

---

| | Rs. | a. |
|---|---|---|
| Nos. I., III., and IV., Panchatantra, with Notes by Dr. Kielhorn and Dr. Bühler. | | |
| Book I., 3rd Edition ... ... ... ... | 0 | 14 |
| Books II. & III., 2nd Edition ... ... ... | 0 | 9 |
| Books IV. & V., 3rd Edition ... ... ... | 6 | 6 |
| Nos. II., VII., IX., and XII., Nâgojîbhaṭṭa's Paribhâshendusekhara, with Translation, by Dr. Kielhorn ... ... | 5 | 0 |
| Nos. V., VIII., and XIII., Kâlidâsa's Raghuvanśa, with Mallinâtha's Commentary, and Notes, by S. P. Pandit, M.A. ... ... ... ... ... ... ... | 4 | 0 |
| No. VI., Kâlidâsa's Mâlavikâgnimitra, with Notes, by S. P. Pandit, M.A. ... ... ... ... ... ... | 1 | 8 |
| No. X., Daṇḍin's Daśakumâracharita, with Notes, by Dr. Bühler, Part I. ... ... ... ... ... | 1 | 0 |
| No. XI., Bhartṛihari's Nîti and Vairâgya Śatakas, with Notes, by K. T. Telang, M.A. Second edition, revised ... | 1 | 0 |
| No. XIV., Bilhaṇa's Vikramâṅkadevacharita, with Introduction, by Dr. Bühler ... ... ... ... ... | 1 | 0 |
| No. XV., Bhavabhûti's Mâlatîmâdhava, with Notes, by R. G. Bhandarkar, M.A. ... ... ... ... ... | 3 | 10 |
| No. XVI., Kâlidâsa's Vikramorvaśî, with Notes, by S. P. Pandit, M.A. ... ... ... ... ... ... | 2 | 0 |
| No. XVII., Hemachandra's Deśînâmamâlâ, with a Glossary, by Dr. Pischel and Dr. Bühler, Part I. ... ... | 3 | 4 |
| Nos. XVIII., XIX., and XX., Patanjali's Vyâkaraṇamahâbhâshya, by Dr. Kielhorn. Volume I., Parts I., II., and III., Rs. 2 each Part ... ... ... ... | 6 | 0 |
| Nos. XXI., XXII., and XXVI., Do. Do. by Do. Vol. II., Parts I. II., and III., at Rs. 2 each Part ... ... | 6 | 0 |
| No. XXIII., The Vâsishṭhadharmaśâstram, edited by Dr. A. A. Führer ... ... ... ... ... ... | 0 | 12 |
| No. XXIV., The Kâdambarî, by Bâṇa and his Son—Part I.—Sanskrit Text. Edited by P. Peterson, M.A. 2nd edit. | 1 | 8 |
| No. XXV., Someśvaradeva's Kîrtikaumudî, edited by Âbâjî Vishnu Kâthavaṭe ... ... ... ... ... | 1 | 4 |
| No. XXVII., Visâkhadatta's Mudrarakshasa with Commentary and Notes by K. T. Telang ... ... ... | 1 | 14 |
| No. XXVIII., Patanjali's Vyâkaraṇamahâbhâshya, by Dr. F. Kielhorn. Vol. III., Part I. ... | 2 | 0 |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha